

चन्दमामा सम्पुटः - २१ मार्च् - २००५ सञ्चिका - १२



# अन्तरङ्गम्



## एतस्य अङ्कस्य विशेषाः














**ग्राहकशुल्कम् -**

अमेरिका-केनडादेशयोः कृते

प्रतिकृतिमूल्यम् - $२

वार्षिकं शुल्कं - $२०

भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -

**Subscription Division**

**CHANDAMAMA INDIA LIMITED**

No. 82, Defence Officers Colony,

Ekkatuthangal, CHENNAI - 600 097

E.mail : subscription@chandamama.org

**ग्राहकशुल्कविवरणम्**

वायुयानेन भारतेतरदेशान् प्रति

वार्षिकं (१२ सञ्चिकाः) - रू.९००/-

भारते रू. १४४/- (बुक्पोस्ट् द्वारा)

भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा

'Chandamama India Limited' नाम्ना प्रेषणीयम् ।

विज्ञापिकादानार्थं सम्पर्क्यताम् -

चेन्नै - *शिवाजी*, Ph - 044-22313637/22347399

Fax: 044-22312447, Mobile: 98412-77347

email : advertisements @ chandamama.org

देहली - OBEROI MEDIA SERVICES, Telefax (011) 22424184

Mobile: 98100-72961, email: a.s.oberoi@indiatimes.com



संस्थापकौ -

चक्रपाणिः, बि.नागिरेड्डिः च

# भूगोलस्य रक्षणाय पालनीयाः निसर्गनियमाः

एषु दिनेषु जाता 'सुनामी'पीडा प्रायः घोरपरिणामकरेषु निसर्गविकोपेषु अन्यतमा । समुद्रे यः अधिककम्पनोपेतः भूकम्पः जातः तस्य परिणामतः एषा सुनामीपीडा उत्पन्ना । एतस्य परिणामतः २,५०,००० जनाः प्राणैः वियुक्ताः जाताः ।

एतदनन्तरं मासाभ्यन्तरे अमेरिका-मध्यप्राच्यादिषु युरोपखण्डस्य भागेषु अनिरीक्षिततया महावृष्टिः जाता । तस्मात् भारतस्य उत्तरभागे हिमपातः जातः, तीव्रा कुज्झटिका अपि पतिता । सामान्यं जनजीवनं क्षतिग्रस्तं जातम् । यत्र सुनामीपीडा जाता तत्र भूकम्पादयः अद्यापि अनुवर्तमानाः दृश्यन्ते ।

एतादृशस्य नैसर्गिकविकोपस्य विविधानि कारणानि वदन्ति विज्ञानिनः परिसरतज्ज्ञाः च । परिसरवैपरीत्यं, भूमिजलादिषु उत्पातः इत्यादीनि कारणत्वेन निर्दिशन्ति ते । मानवाः वयं निसर्गविषये यादृशं व्यवहारं कुर्मः तदनुगुणम् एव व्यवहरति निसर्गः अपि ।

भूगोलस्य रक्षणाय केषाञ्चित् निसर्ग नियमानां पालनम् अस्माभिः अवश्यं करणीयम् । तदर्थं कालः सम्प्राप्तः अस्ति । लघवः उपायाः अपि अत्र उपकारिणः भवितुम् अर्हन्ति । स्वस्य परिसरस्य स्वच्छतायाः संरक्षणात् निसर्गस्य समतोलनं संरक्षितं स्यात् । अद्य अरण्यनाशः, जलमालिन्यं, वायुप्रदूषणम् इत्यादीनां कारणतः निसर्गसमतोलनं विनष्टम् अस्ति । निसर्गस्य अधीनीकरणाय यत्र मानवः प्रयतते तत्र निसर्गः सहजतया कुपितः स्यादेव ।

मानवकुलस्य हिताय वयं मार्च्मासस्य २१तमे दिनाङ्के 'भूमिदिनं', २२ दिनाङ्के 'जलदिनं' च सश्रद्धम् आचरेम ।

सम्पादकः - विश्वम्

Visit us at : http://www.chandamama.org



**Statement about Ownership of**
**CHANDAMAMA (Sanskrit)**
Rule 8 (Form VI), Newspaper (Central) Rules, 1956

1. **Place of Publication**
   82 Defence Officers Colony
   Ekkatuthangal, Chennai-600 097
2. **Periodicity of Publication**
   MONTHLY
   1st of each calendar month
3. **Printer's Name**
   B. VISWANATHA REDDI
   **Nationality**
   INDIAN
   **Address**
   82 Defence Officers Colony
   Ekkatuthangal, Chennai-600 097
4. **Publisher's Name**
   B. VISWANATHA REDDI
   **Nationality**
   INDIAN
   **Address**
   82 Defence Officers Colony
   Ekkatuthangal, Chennai-600 097
5. **Editor's Name**
   B. VISWANATHA REDDI
   (Viswam)
   **Nationality**
   INDIAN
   **Address**
   82 Defence Officers Colony
   Ekkatuthangal, Chennai-600 097
6. Name and Address of individuals who own the newspaper
   Chandamama India Ltd.
   Board of Directors:
   1. P. Sudhir Rao
   2. Vinod Sethi
   3. B. Viswanatha Reddi
   82 Defence Officers Colony
   Ekkatuthangal, Chennai-600 097

*I,* **B. Viswanatha Reddi,** *do hereby declare that the particulars given above are true to the best of my knowledge and belief.*

(Sd.) B. VISWANATHA REDDI
1st March 2005 *Publisher*



# स्वप्नस्य तात्पर्यम्

शिवरामः लक्ष्मीपुरग्रामस्य निवासी । सः धनिककुले जातः । बाल्ये एव सः मातापितृवियोगं प्राप्तवान् आसीत् । अतः पितामही एव तम् अतिप्रेम्णा पोषितवती । तस्मात् बाल्यात् एव सः अलसः असत्प्रवृत्तिकः च संवृत्तः । कृषिकार्यादिषु आसक्तिः न दर्शिता तेन । तादृशानि कार्याणि कर्मकराधीनानि कृत्वा ग्रामे वृथा अटति स्म सः ।

कदाचित् अमावास्यादिने भोजनं कृत्वा सुखेन शयितवान् सः कञ्चित् विलक्षणं स्वप्नं दृष्टवान् ।

स्वप्ने तेन दुर्गामन्दिरस्य पुरतः किञ्चिन सिंहासनं दृष्टम् । सिंहासने आत्मनः उपवेशनम् अपि दृष्टम् । तस्य शिरसि कश्चन उलूकः उपविष्टः दृष्टः । ग्रामजनाः दुर्गापूजां परित्यज्य तमेव पूजयन्तः, नैवेद्यं समर्पयन्तः चापि दृष्टाः । दूरे स्थितः कश्चन शुनकः तं दृष्ट्वा भषन् दृष्टः !

एतदनन्तरं शिवरामः जागरितः जातः । सः तं स्वप्नं विस्मर्तुं न शक्तवान् । सः पितामहीं स्वप्नस्य तात्पर्यं पृष्टवान् । तदा पितामही उक्तवती – ''अये शिव ! स्वप्नाः देवरहस्यानि इति निर्दिश्यन्ते । तेषां तात्पर्यम् अस्मदादिभिः न अवगम्यते । अस्माकं ग्रामस्य मुख्यः हरिनारायणः स्वप्नफलकथने निपुणः । सः पृष्टः चेत् स्वप्नस्य तात्पर्यं सम्यक् ज्ञायेत'' इति ।

शिवरामः हरिनारायणं दृष्ट्वा स्वप्नवृत्तान्तं विस्तरेण तम् उक्तवान् । तदा हरिनारायणः अवदत् – ''भवान् आत्मानं श्रेष्ठं मन्यते । तस्य परिणामतः भवता एतादृशः स्वप्नः दृष्टः'' इति ।

एतत् श्रुत्वा शिवरामः अवदत् – ''अहं कदापि आत्मानं श्रेष्ठं न भावितवान् । अहं देवतातुल्यः अस्मि इति भावः मयि कदापि न आगतः एव । तथापि भवदुक्तं युक्तम् इत्येव मन्येत चेदपि शुनकः किमर्थं भषति स्म,

भामहः



उलूकः किमर्थं शिरसि उपविशति स्म इति तु प्रश्नः अनुत्तरितः एव तिष्ठति !'' इति ।

हरिनारायणः किञ्चित् विचिन्त्य अवदत् – ''प्रतिवेशिग्रामे वसन् श्रीधरः स्वप्नफल-विषयकाणां ग्रन्थानाम् अध्ययनं कृतवान् अस्ति । सः प्रष्टव्यः एतद्विषये'' इति ।

शिवः श्रीधरेण मिलित्वा स्वप्नवृत्तान्तं निवेद्य स्वस्य प्रश्नान् अपृच्छत् । तदा श्रीधरः अवदत् – ''भवतः ग्रामस्य महती हानिः भविष्यति । अतः एव ग्रामजनाः देवीपूजां परित्यज्य भवतः पूजां कर्तुम् उद्युक्ताः सन्ति'' इति ।

एतेन उत्तरेण शिवरामः न सन्तुष्टः । सः अपृच्छत् – ''एवं तर्हि शुनकभषणस्य, उलूक-दर्शनस्य च तात्पर्यं किम् ?'' इति ।

''शुनकः तु बुभुक्षितः आसीत् । अतः तेन भषणं कृतम् । जनाः देवीपूजां परित्यज्य भवतः पूजां यत् कर्तुम् उद्युक्ताः तत् अनिष्ट-कारकम् । तस्य ज्ञापनाय उलूकः भवतः शिरसि उपविष्टः दृष्टः'' इति उक्तवान् श्रीधरः ।

एतदनन्तरं शिवरामः ततः प्रस्थितवान् । स्वग्रामं प्राप्य श्रान्तिपरिहाराय सः कस्यचित् वृक्षस्य अधः उपविष्टवान् । तदा पार्श्वे एव उपविष्टः विरागी तम् अपृच्छत् – ''अये शिवराम ! एषु दिनेषु भवान् न दृष्टः एव ! क्व गतम् आसीत् भवता ?'' इति ।

जनाः तं विरागिणम् उन्मत्तं भावयन्तः पदे पदे हसन्ति स्म । शिवरामः अपि एतत् जानाति स्म एव । सः विरागिणम् अवदत् – ''मया

कश्चन विलक्षणः स्वप्नः दृष्टः । तस्य तात्पर्यस्य अवगमनाय मया ग्रामान्तरं गतम् आसीत्'' इति ।

तदा विरागी हसन् अवदत् - ''कोऽपि तस्य तात्पर्यं समीचीनतया उक्तवान् न स्यात् खलु !'' इति ।

''युक्तम् एव उक्तं भवता । कोऽपि तस्य तात्पर्यं योग्येन क्रमेण न उक्तवान् इति तु सत्यम् एव । किन्तु एतत् कथं ज्ञातं भवता ?'' इति आश्चर्येण अपृच्छत् शिवरामः ।

''अये मूर्ख ! भवतः स्वप्नस्य तात्पर्यं वक्तुं समर्थः एकः एव अस्ति लोके । स च अहम् एव'' इति उच्चैः हसन् अवदत् विरागी । शिवरामः स्वस्य स्वप्नस्य पूर्णं विवरणं दत्तवान् ।

तदा विरागी उच्चैः हसन् उक्तवान् - ''जनेषु दैवभक्तिः दिने दिने क्षीयमाणा अस्ति । जनेषु स्वार्थबुद्धिः आलस्यं च वर्धमानम् अस्ति । एतस्य एव प्रत्यक्षम् उदाहरणम् अस्ति - परमालसस्य भवतः पूजाकरणम् । सुवर्ण-सिंहासनं यत् दृष्टं तत् तु भवतः दुराशायाः द्योतकम्'' इति ।

''शुनकः किमर्थम् अभषत् ? उलूकः मम शिरसि किमर्थम् उपाविशत् ?'' इति अपृच्छत् शिवरामः ।

तदा विरागी अवदत् - ''भवतः पितामही प्रतिदिनं भवन्तं, तं शुनकं चापि भोजयति । भवान् क्षेत्रे कार्यम् अकुर्वन् ग्रामे वृथा अटन् कालं यापयति इत्यतः शुनकः भवति घृणां प्रदर्शयति । तदर्थम् एव सः भवन्तं दृष्ट्वा भषति । उलूकः सर्वदा अन्धकारप्रियः । भवान् परमालसः इत्यतः अज्ञानान्धकारे निमग्नः । अतः एव उलूकः प्रीत्या भवतः शिरसि उपविष्टवान्'' इति ।

''श्रीमन् ! भवान् महाज्ञानी एव । जनाः भवन्तम् उन्मत्तं भावयन्ति यत् तत् तेषाम् अज्ञानं दर्शयति । भवतः बोधनतः मयि ज्ञानम् उदितम् अस्ति'' इति अवदत् शिवरामः ।

ततः प्रस्थातुम् उद्युक्तस्य शिवरामस्य गमनं स्थगयन् विरागी - ''समग्रः ग्रामः एव माम् उन्मत्तं भावयति । मां तादृशम् अभावयन् भवान् कीदृशः महापुरुषः ! गच्छ रे गच्छ । एतस्मिन् ग्रामे अहमपि स्थातुं न इच्छामि'' इति वदन् उच्चैः हसन् ततः निर्गतवान् ।






# सज्जनानां सहवासः

कश्चन ग्रामः । तत्र स्थितेषु आढ्येषु भूषणोऽपि अन्यतमः । तस्य गृहम् अतीव विशालम् । चत्वारः भ्रातरः तस्मिन् गृहे निवसन्ति । प्रतिदिनमपि सायं गृहस्य, पार्श्वगृहस्य च बालकाः तत्र आगत्य क्रीडन्तः महान्तं कोलाहलं कुर्वन्ति स्म ।

कदाचित् सूर्यस्य अस्तमनवेलायां कश्चन शकटः आगत्य भूषणस्य गृहस्य पुरतः स्थितः । शकटे कः अस्ति इति द्रष्टुं सर्वे बालकाः उत्सुकाः । तावता देहल्याम् उपविष्टौ भूषणः तस्य अग्रजश्च उत्थाय शकटसमीपं गतौ । शकटात् अवतरन्तीं काञ्चन वृद्धां दृष्ट्वा – ''अम्ब । कथमस्ति भवती ? कुशलिनी किल ?'' इति पृष्टवन्तौ ।

तां वृद्धां दृष्टवतां बालानां मुखेषु सन्तोषस्य चिह्नानि दृष्टानि । ते उच्चस्वरेण – ''पितामही आगता । पितामही आगता'' इति वदन्तः तां वृद्धां परितः स्थिताः ।

सा वृद्धा भूषणस्य पितृव्या सावित्री । सा अस्मात् ग्रामात् किञ्चिद्दूरे निवसति । भूषणस्य, तद्गृहसदस्यानां च विषये तस्याः महती प्रीतिः । सा आगता चेत् गृहे स्थिताः सर्वे बालाः तस्याः कथाश्रवणे एव निमग्नाः सन्तः भोजनादिकमपि विस्मरन्ति स्म ।

रात्रिः जाता । सर्वेषां भोजनं समाप्तम् । सर्वे एकत्र उपविष्टाः । पितामही भूषणस्य कनिष्ठं पुत्रं पश्यन्ती पृष्टवती – ''गोपाल ! हस्ते पट्टिका दृश्यते किल ? किम् अभवत् ?'' इति ।

गोपालः किमपि वक्तुं यावत् उद्युक्तः तावता भूषणस्य पत्नी पुत्रम् आक्षिपन्ती उक्तवती – ''मातः ! एषः शालायां दुष्टानां बालकानां मैत्रीं कृतवान् । ते तु विना कारणं परस्परं कलहं कुर्वन्ति । तादृशे कलहे एषः व्रणितः अभवत्'' इति ।

तदा तं गोपालम् अङ्के आरोपयन्ती सा

वृद्धा – ''एषोऽपि दुष्टः एव स्यात्। दुष्टः एव दुष्टस्य मैत्रीं करोति'' इति उक्त्वा गोपालम् उद्दिश्य – ''गोपाल ! शृणोतु । सज्जनानां सहवासः एव सर्वेषु उत्तमः । अतः योग्यानां जनानाम् एव मैत्री करणीया । सज्जनानां सहवासेन कीदृशं फलं जायते इति ज्ञापयितुं कथामेकां कथयामि । सश्रद्धं शृणोतु'' इति उक्त्वा कथाम् आरब्धवती –

''पुरातनी कथा एषा । रामपुरनामके ग्रामे कश्चन भूस्वामी निवसति स्म। सः अतीव दयालुः धर्मिष्ठः च । तस्य पुत्रः श्रीकान्तः । सोऽपि पितृसदृशः एव । नितरां सज्जनः सः । अन्यैः सह तस्य व्यवहारः अत्यन्तं मृदुः आसीत् । अतः जनाः अपि तं प्रशंसन्ति स्म ।



तस्मिन् एव ग्रामे कश्चन कृषिकः राजीव–नामकः आसीत् । तस्य पुत्रस्य नाम सोमदेवः इति । सः सोमदेवः स्वभावेन दुष्टः, किन्तु पठने तस्य महती अभिरुचिः । अतः राजीवः स्वपुत्रं तस्मिन् ग्रामे स्थितस्य नारायणत्रिवेदिनामकस्य अध्यापकस्य समीपं पठनार्थं प्रेषितवान् ।

सोमदेवः इव श्रीकान्तः अपि तस्य अध्यापकस्य सकाशात् एव पठति स्म । श्रीकान्तः सोमदेवेन सह महता आदरेणैव व्यवहरति स्म । मधुरेण स्वरेण सम्भाषणं करोति स्म । किन्तु सोमदेवस्य व्यवहारः तु सर्वथा विरुद्धः एव। सः श्रीकान्तं न गणयति स्म । सर्वदा गर्वव्यवहारः तस्य ।

केषुचित् दिनेषु उभयोः अपि विद्या समाप्ता । श्रीकान्तः इतोऽपि अध्ययनं करणीयमिति मनीषया ग्रामात् दूरे स्थितायां भूस्वामिनः शालायां पठनम् आरब्धवान् । राजीवः स्वपुत्रमपि श्रीकान्तेन सह प्रेषयितुम् इष्टवान् । श्रीकान्तः येन यानेन गच्छति तेनैव यानेन पुत्रस्य प्रेषणाय व्यवस्थां कृतवान् च ।

कदाचित् सोमदेवः सहपाठिनं भू-स्वामिनः पुत्रं शङ्करं पाषाणेन ताडितवान् । तेन व्रणितः अभवत् शङ्करः । एषा वार्ता शालायां सर्वत्र प्रसृता ।

मुख्योपाध्यायः विष्णुशर्मा वैद्यम् आनेतुं कञ्चन सम्प्रेष्य शङ्करस्य व्रणितं भागं वस्त्रेण बद्धवान् । 'पाषणं कः क्षिप्तवान् ?' इति कोपेन पृष्टवान् च ।

एतत् श्रुतवतः सोमदेवस्य देहे कम्पनम् आरब्धम् । तावता द्वित्राः बालाः सोमदेवं

दर्शितवन्तः । एतत् श्रुत्वा आश्चर्यचकितः सन् विष्णुशर्मा पृष्टवान् - ''एषः सोमदेवः श्रीकान्तस्य मित्रम् । एषः तादृशं कार्यं कथं कर्तुम् अर्हेत् ?'' इति

गुरोः वचनं श्रुत्वा सोमदेवस्य नेत्रे अश्रुपूर्णे । तेन इदानीम् अवगतं यत् स्वस्मिन् कियती दुष्टता अस्ति, श्रीकान्ते च कियत् सौजन्यम् अस्ति इति । स्वस्य दुष्टताविषये बहुधा पश्चात्तापम् अनुभूतवान् सः ।

विष्णुशर्मा सोमदेवस्य अवस्थां पश्यन् तान् बालकान् उक्तवान् - ''पश्यन्तु । मया किमपि न भर्त्सितम् । तथापि सोमदेवः महत् दुःखम् अनुभवन् अस्ति । एतादृशः तादृशं नीचं कार्यं कथं कुर्यात् ? इतःपरं सज्जनेषु दोषारोपणं न कुर्वन्तु'' इति ।

तदा शङ्करोऽपि स्नेहपूर्णया दृष्ट्या सोमदेवं पश्यन् उक्तवान् - ''सोमदेवः न केवलं श्रीकान्तस्य, अपि तु ममापि मित्रम् एव । एषः दुष्टं कार्यं कर्तुं न अर्हति'' इति

एतत् श्रुत्वा सोमदेवः स्तब्धः अभवत् । तस्य मुखात् एकः अपि शब्दः न निःसृतः । क्षणाभ्यन्तरे जागरितः सः विष्णुशर्मणः समीपं गत्वा शिरः अवनमय्य उक्तवान् - ''गुरुवर्य ! शङ्करं पाषाणेन अहमेव ताडितवान् । शङ्करश्रीकान्तौ गुणशालिनौ । अत एव तौ मां दोषरहितं भावयतः'' इति ।

सोमदेवस्य पश्चात्तापयुक्तं वचनं श्रुत्वा विष्णुशर्मा किमपि वक्तुम् उद्युक्तः । तदा शङ्करः श्रीकान्तश्च - ''गुरुवर्य ! आवां जानीवः एव यत् सोमदेवः एव पाषाणं क्षिप्तवान् इति । किन्तु तस्य पश्चात्तापयुक्तं व्यवहारं पश्यतोः आवयोः तस्य विषये दया उत्पन्ना । अतः आवां तं निर्दोषिणम् उक्तवन्तौ । कृपया सोमदेवं मा दण्डयतु'' इति ।

विष्णुशर्मा तयोः उदारतां दृष्ट्वा सन्तुष्टः सन् सोमदेवम् उक्तवान् - ''पश्यतु, सोमदेव ! भवता सज्जनसहवासः प्राप्तः अस्ति । भवान् निश्चयेन भाग्यवान्'' इति ।

पितामही कथां समाप्य उक्तवती - ''वत्साः ! सज्जनसहवासः कीदृशफलदायकः इति भवद्भिः ज्ञातमिति मन्ये'' इति ।

तदा बालकाः सर्वे सन्तोषेण अवदन् - ''आम् । सम्यक् ज्ञातम् । इतःपरं वयम् उत्तमानाम् एव मैत्रीं करिष्यामः'' इति ।





# भल्लूकमान्त्रिकः

## १५

*[कालीवर्मा अनुचरैः सह दुर्गं प्रविष्टवान् । मायामर्कटः कर्तितं किञ्चन शिरः दर्शितवान् । कालीवर्मादयः अवगतवन्तः यत् एतत् शिरः राज्ञः दुर्मुखस्य न इति । ततः ते सर्वे दुर्मुखस्य अन्वेषणाय उद्युक्ताः । अन्ते तैः सभास्थले सिंहासने उपविष्टः दुर्मुखः दृष्टः । वधकभल्लूकः गजात् अवतीर्य परशुहस्तः सन् वेगेन सभास्थलं प्रविष्टवान् । तदनन्तरम्... ]*

वधकभल्लूकस्य आगमनं दृष्ट्वैव कालीवर्मा अवगतवान् यत् कापि दुर्घटना इदानीं घटेत इति । अतः सः गजम् आरूढवन्तं भिल्लतरुणम् अवदत् - ''अये भिल्लतरुण ! राज्ञः दुर्मुखस्य वधं कर्तुं प्रस्थितं वधकभल्लूकं ततः निवारयतु'' इति ।

ततः सः वधकभल्लूकम् उद्दिश्य उच्चस्वरेण अवदत् - ''अये वधकभल्लूक ! अलं साहसेन । एषोऽहम् आगच्छामि । राजानं मा मारयतु कृपया'' इति ।

कालीवर्मणः आदेशं प्राप्य भिल्लयुवकः गजात् अवतीर्य वेगेन पदानि स्थापयन् गत्वा वधकभल्लूकस्य पुरतः स्थित्वा अवदत् - ''भल्लूकवर्य ! त्वरा मा क्रियताम् । राज्ञः दुर्मुखस्य शिरः न कर्तनीयम् इति कालीवर्मणः आज्ञा अस्ति'' इति ।

तदा वधकभल्लूकः क्रोधेन अवदत् - ''भल्लूकमान्त्रिकः माम् आज्ञापितवान् अस्ति



यत् एतस्य शिरः कर्तयित्वा आनेतव्यम् इति । तस्य आज्ञा यदि मया न पाल्येत तर्हि सः मां भल्लूकमेव करिष्यति'' इति ।

अत्रान्तरे तत्र उपस्थितः कालीवर्मा महासिंहासने निश्चलतया उपविष्टवन्तं राजानं दुर्मखं दृष्ट्वा अवदत् - ''अहो, एतस्य किं जातम् ? किमर्थम् एषः एवं नेत्रे निमील्य निश्चेष्टतया स्थितवान् अस्ति ?'' इति ।

वधकभल्लूकः स्वस्य परशुं स्कन्धे स्थापयन् अवदत् - ''कालीवर्मवर्य ! आदिशतु भवान् मया किं करणीयम् इति'' इति ।

कालीवर्मा दुर्मुखम् उपसर्प्य तं परीक्षादृष्ट्या पश्यन् अवदत् - ''वधकभल्लूक ! भवता एतस्य शिरः कर्तनीयं न भवति प्रायः । यतः एषः एतावता एव दिवं गतः अस्ति । आगच्छन्तं परशुहस्तं भवन्तं दृष्ट्वा नितरां भीतस्य एतस्य हृदयं तत्रैव स्तब्धं स्यात्' इति ।

''किं वधकभल्लूकः राज्ञः दुर्मुखस्य शिरः कर्तितवान् एव !'' इति वदन् भल्लूकमान्त्रिकः तं प्रकोष्ठं प्रविष्टवान् । तावता तेन निश्चेष्टतया सिंहासने उपविष्टः राजा दृष्टः । सः पुनः अवदत् - ''भीत्या एषः विसंज्ञः जातः इति मन्ये'' इति ।

ततः सः स्वस्य खड्गस्य अग्रेण राज्ञः स्कन्धं स्पृशन् अवदत् - ''अये राजन् ! दुर्मुख ! सचेतनः भवतु भवान् । भीतेः न कापि आवश्यकता । एषोऽहं भवते अभयं ददामि'' इति ।

दुर्मुखः झटिति नेत्रे उन्मील्य हस्ताभ्यां शिरः स्पृशन् अवदत् - ''अहो ! मम शिरः अकर्तितम् एव दृश्यते ! वधकभल्लूकेन परशोः प्रयोगः कृतः चेदपि कथम् एवं सञ्जातम् !'' इति ।

तस्य वचनं श्रुत्वा सर्वे हसितवन्तः । दुर्मुखः सिंहासनात् उत्तिष्ठन् अवदत् - ''कलीवर्मन् ! भल्लूकमान्त्रिकादयः सर्वे अत्रैव उपस्थिताः सन्ति । पुनः एकवारं सिंहासने उपवेष्टव्यम् इति मम तीव्रा इच्छा । तदनन्तरं शिरश्छेदः भवति चेदपि न कापि चिन्ता मम'' इति ।

कालीवर्मा दुर्मुखं स्कन्धे गृहीत्वा सिंहासने उपवेश्य उक्तवान् - ''राजन् ! इदानीं भवान् अस्माकं मित्रम् अस्ति । यत् प्रवृत्तं तत् विस्मरतु तावत् । यः भवतः सिंहासनं स्वाधीनीकृतवान् सः सूर्यभूपतिः, भल्लूकमान्त्रिकस्य मन्त्रदण्डम् अपहृतवान् मायामर्कटः च सम्मिलितौ स्तः । अतः तयोः ग्रहणम्

अस्माकम् आद्यं कर्तव्यम् अस्ति'' इति ।

कालीवर्मणः एतत् वचनं श्रुत्वा राजा दुर्मुखः नितरां सन्तुष्टः । सः सिंहासनात् उत्थाय वेगेन सभामध्यम् आगत्य खड्गम् उन्नीय उच्चस्वरेण अवदत् - ''श्रूयताम् । ये अत्र उपस्थिताः न भवन्ति ते राजद्रोहित्वेन परिगणयिष्यन्ते । तेषां शिरश्छेदः कार्यते च'' इति ।

अनन्तरक्षणे एव दुर्गस्य नानाकोणेभ्यः सैनिकाः तत्र आगताः । कालीवर्मा तान् गणयित्वा दुर्मुखम् अवदत् - ''दुर्मुखवर्य ! भवतः सैनिकाः चत्वारिंशत्संख्याकाः अपि न सन्ति । उदयगिरिराज्ये किम् एतावन्तः एव सैनिकाः ?'' इति ।

अपमानेन शिरः अवनमय्य दुर्मुखः अवदत् - ''कालीवर्मन् ! सः दुष्टः सूर्यभूपतिः धनलोभं प्रदर्श्य सर्वान् सैनिकान् वशीकृतवान् अस्ति । अतः आदौ अस्माभिः सः दुष्टः अन्वेष्टव्यः'' इति ।

कालीवर्मा भल्लूकमान्त्रिकं पश्यन् अपृच्छत् - ''मान्त्रिकवर्य ! अग्रे किं करणीयम् इति अपेक्षते भवान् ?'' इति ।

भल्लूकमान्त्रिकः सभामण्डपस्य भित्तेः पार्श्वे स्थित्वा दुर्गभित्तिम् एव निर्निमेषं पश्यन् आसीत् । मन्त्रदण्डविषये एव महती चिन्ता आसीत् तस्य । 'एतस्यां स्थितौ यदि अहम् इतः निर्गच्छेयं तर्हि राजा दुर्मुखः शत्रूणां हस्तगतः भवेत्, नानाविधानि कष्टानि च अनुभवेत् । तथा सति कालीवर्मा अपि भल्लूकपादसमीपम् गमनं निराकुर्यात् अपि' इति चिन्तयन् सः कालीवर्माणम् अवदत् - ''कालीवर्मन् ! मम अपेक्षा का इति ज्ञानं पार्श्वे स्थापयतु । भवान् इदानीं किं कर्तुम् इच्छति इति आदौ वदतु'' इति ।



तदा कालीवर्मा अवदत् - ''गुरुवर्य ! किम् एषोऽपि प्रश्नार्हः विषयः ? पूर्वं भवता उक्तम् आसीत् यत् मया भल्लूकपादस्य निवासपर्वतं प्रति आगन्तव्यम् इति । तदर्थं भवतः आदेशः प्रतीक्ष्यते मया'' इति ।

''साधु कालीवर्मन् ! साधु । उत्तमः शिष्यः भवान् । भवतः गुरुभक्तिः नितरां प्रशंसनीया । मम गुरुवर्यः भल्लूकपादः कस्यचित् तान्त्रिकस्य कारणतः जटिलां समस्यां सम्मुखीकुर्वन् अस्ति । भवादृशः साहसी वीरः एव तस्य साहाय्यं कर्तुम् अर्हति इदानीम् । एतादृशस्य साहाय्यस्य प्रतिफलरूपेण किम् इच्छति भवान् ? निस्सङ्कोचं वदतु तावत्''



इति अवदत् भल्लूकमान्त्रिकः ।

कालीवर्मा क्षणं यावत् विचिन्त्य अवदत् – ''गुरुवर्य ! प्रतिफलस्य विषये अनन्तरं चिन्तयाम । राजा जितकेतुः यदा मम शिरश्छेदम् आज्ञापितवान् आसीत् तदा शिरीषवने भवता मम विशेषसाहाय्यं कृतम् । तदा मया प्रतिज्ञातम् आसीत् यत् भवान् यादृशम् इच्छति तादृशं साहाय्यं करिष्यते मया इति । अतः इदानीं भवदाज्ञाधारकः अस्मि अहम्'' इति ।

''एवं तर्हि भवता ब्रह्मपुत्रनदस्य उत्पत्तिस्थाने स्थितं भल्लूकपर्वतं प्रति आगन्तव्यं भवति'' इति अवदत् भल्लूकमान्त्रिकः ।

''भवदाज्ञाधारकः अस्मि इति उक्तं खलु मया ? भवता सह आगमनाय सन्नद्धः एव अस्मि अहम्'' इति अवदत् कालीवर्मा ।

तदा राजा दुर्मुखः भयेन कम्पमानः सन् अवदत् – ''मान्त्रिकप्रभो ! भवता अहं विस्मृतः इति भाति । एतावताम् अल्पसंख्याकानां सैनिकानां साहाय्येन राज्यशासनं सर्वथा अशक्यम् । अतः अहम् अपि भवता सह भल्लूकपर्वतं प्रति आगमिष्यामि'' इति ।

भल्लूकमान्त्रिकः यावत् किमपि वक्तुम् उद्युक्तः तावता वधकभल्लूकः परशुं भूमौ क्षिप्त्वा रोदनस्वरेण अवदत् – ''श्रीमन् ! भवान् माम् अपि विस्मृतवान् एव । भवन्तः सर्वे निर्गताः चेत् मम पूर्वतनः स्वामी जितकेतुः आज्ञोल्लङ्घनापराधनिमित्तं मम शिरश्छेदं कारयेत् एव । अतः भवान् माम् अपि आत्मना सह नयतु'' इति ।

तदा भल्लूकमान्त्रिकः वधकभल्लूकस्य स्कन्धे हस्तं स्थापयन् अवदत् – ''वधक ! अलं भीत्या । मया भवतः, राज्ञः दुर्मुखस्य च विषयः न सर्वथा विस्मृतः । भवतोः उभयोः अपि योग्यां व्यवस्थां कृत्वैव अहम् इतः निर्गमिष्यामि । चन्द्रशिलायाः राजा जितकेतुः मम कालीवर्मणः चापि अपमाननं कृतवान् अस्ति । अतः अहं कालीवर्मणा सह गत्वा तस्य संहारं करिष्यामि'' इति ।

''तस्य दुष्टस्य राज्ञः मन्त्री जीवगुप्तः कैश्चित् सैनिकैः सह दुर्गात् बहिः स्थितः अस्ति । सः हठात् आक्रमणं यथा न कुर्यात् तथा कर्तुम् उग्रदण्डराक्षसः अपि दुर्गात् बहिः एव तिष्ठति । सामन्तः सूर्यभूपतिः मायामर्कटः च दुर्गस्य कस्मिन् कोणे निलीय तिष्ठतः इति तु न ज्ञायते'' इति अवदत् कालीवर्मा ।

कालीवर्मणः एतत् वचनं श्रुत्वा वधकभल्लूकः स्वस्य परशुं स्कन्धे आरोप्य –

''कालीवर्मवर्य ! अहं गजम् आरुह्य दुर्गात् बहिः गत्वा तत्रत्यां स्थितिं परिशीलयिष्यामि । उग्रदण्डस्य साहाय्यार्थम् आगतं मां दृष्ट्वा मन्त्री जीवगुप्तः चन्द्रशिलानगरं प्रति पलायनं कुर्यात् अपि कदाचित्'' इति अवदत् ।

''भवतः तत्र गमनं युक्तम् एव । वयम् अपि सामन्तं सूर्यभूपतिं मायामर्कटं च अन्विष्य तत्रैव आगमिष्यामः'' इति अवदत् कालीवर्मा ।

''अये भिल्लतरुण ! गजम् एतस्यां दिशि आनयतु तावत्'' इति भिल्लतरुणम् आज्ञापितवान् वधकभल्लूकः ।

भिल्लतरुणेन यदा गजः आनीतः तदा वधकभल्लूकः तम् आरुह्य उपविष्टवान् । एतावत्पर्यन्तं सर्वं मौनेन शृण्वन् स्थितः राजा दुर्मुखः भल्लूकमान्त्रिकम् अवदत् - ''मन्त्रिकप्रभो ! एतावद्भिः अल्पसंख्याकैः सैनिकैः सह दुर्गे स्थितिः न क्षेमाय । अतः अहम् अपि भवद्भिः सह चन्द्रशिलानगरं प्रति आगमिष्यामि'' इति ।

एतदनन्तरं सर्वे सभास्थलतः बहिः आगताः । ततः भटाः आज्ञापिताः यत् सामन्तभूपतेः मायामर्कटस्य च अन्वेषणं करणीयम् इति । अत्रान्तरे द्वारसमीपे स्थिताः रक्षकभटाः उच्चस्वरेण उक्तवन्तः - ''महाराज ! सामन्तभूपतिः, मायामर्कटः, जितकेतोः मन्त्री जीवगुप्तः च उग्रदण्डस्य समीपे स्थिताः सन्ति । ते उग्रदण्डेन सह वार्तालापे मग्नाः दृश्यन्ते'' इति ।

''गुरुवर्य ! मम पूर्वमेव सन्देहः आसीत् यत् एवमेव किमपि प्रवर्तेत इति । द्वारसमीपे



अस्माभिः केचन सैनिकाः स्थापनीयाः आसन् प्रायः । ते दुष्टाः राक्षसम् उग्रदण्डं स्वपक्षीयं कर्तुं प्रयत्नं कुर्वन्तः सन्ति इति भाति'' इति ।

''कालीवर्मन् ! अलं चिन्तया । तेषां प्रयासः कदापि सफलः न भविष्यति । सः राक्षसः मत्तः किमपि साहाय्यम् इच्छति । अतः सः अस्मत्पक्षं न त्यक्ष्यति'' इति अवदत् भल्लूकमान्त्रिकः ।

कालीवर्मणः चिन्तनं युक्तम् एव आसीत् । जीवगुप्तादयः उग्रदण्डं स्वपक्षीयं कर्तुं प्रयासरताः आसन् । विविधानि प्रलोभनानि उपस्थापितानि तैः । मायामर्कटरूपेण स्थितः भ्रान्तमतिः अपि तेषां पक्षं समर्थयन् आसीत् ।

राक्षसः उग्रदण्डः शिलागदाम् उन्नीय अवदत् - ''अहं भवत्सु कस्यापि साहाय्यं न इच्छामि । भल्लूकपर्वते मम कश्चन बन्धुः

बन्धने अस्ति । सः बन्धनात् मोचनीयः मया । एतदेव मम एकमात्रं लक्ष्यम्'' इति

एतत् श्रुत्वा मायामर्कटः उपहासपूर्वकं तम् अवदत् - ''अये उग्रदण्ड ! भवतः बन्धुः सः कः ? भवदीयः अग्रजः एव खलु ? सः इदानीं न जीवति एव । मम गुरुः मिथ्यामिश्रः तम् इतः पूर्वम् एव मारयित्वा भूमौ निखातवान् अस्ति । अतः तस्य मोचनस्य चिन्तनं परित्यज्य जितकेतोः पक्षम् अवलम्ब्य सुखेन जीवतु तावत्'' इति ।

''सः तान्त्रिकः मम सहोदरं किं वस्तुतः अपि मारितवान् ? असत्यं तु न उच्यते खलु भवता ?'' इति अपृच्छत् उग्रदण्डः ।

मायामर्कटः यावत् किमपि वक्तुम् उद्युक्तः तावता जीवगुप्तः अवदत् - ''उग्रदण्ड ! यत् प्रवृत्तं तत् विस्मरतु तावत् । यदि भवान् अस्मत्पक्षे भवेत् तर्हि वयं गर्वं वहेम यत् अस्मत्पक्षे अपि कश्चन राक्षसः अस्ति इति । भवान् अपि राजाश्रयं प्राप्य सुखेन जीवितुम् अर्हति'' इति ।

''भवतः आशयः यत् भवद्राजा नियमनिबन्धनं विनैव आश्रयं दास्यति इति । एवं ननु ?'' इति अपृच्छत् उग्रदण्डः ।

''प्रायः तथैव । अत्यल्पं साहाय्यम् इच्छामः वयम् । अत्र दुर्गे भल्लूकमान्त्रिकः कालीवर्मा चेति उभौ दुष्टौ स्तः । राजा दुर्मुखः अपि तत्रैव अस्ति । ते त्रयः भवता मारणीयाः । तदा सन्तुष्टः अस्मद्राजः भवते आश्रयं दास्यति'' इति अवदत् जीवगुप्तः ।

उग्रदण्डः यावत् उत्तरं किमपि वक्तुम् उद्युक्तः तावता महिषारूढः भल्लूकमान्त्रिकः अन्ये च दुर्गतः बहिः आगताः । तान् दूरात् एव दृष्ट्वा मन्त्री जीवगुप्तः नितरां भीतः । किं करणीयम् इति अजानन् सः इतस्ततः अपश्यत् । सः सामन्तस्य सूर्यभूपतेः, मायामर्कटस्य च उपरि दृष्टिम् अपातयत् ।

राक्षसः उग्रदण्डः उच्चैः हूङ्कुर्वन् अवदत् - ''मन्त्रिन् ! मम साहाय्यम् अपेक्ष्यते खलु भवता ? अवश्यं करिष्यामि साहाय्यम्'' इति वदन् शिलागदान् उन्नीय भ्रमयित्वा मायामर्कटं लक्ष्यीकृत्य क्षिप्तवान् ।

मायामर्कटः कीच्कुर्वन् अश्वतः उत्प्लुतवान् । उग्रदण्डेन क्षिप्ता गदा अश्वस्य शिरसि घट्टिता जाता । *- (अनुवर्तते)*



# वेताल-कथा

## धर्मदासस्य शक्तयः

स्वीकृतं कार्यं त्यक्तुम् अनिच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - "अये राजन् ! कार्यसाधनाय भवान् याम् आस्थां दर्शयति सा निश्चयेन अस्ति प्रशंसार्हा । किन्तु एतावता प्रयत्नेन भवता किं साधितम् ? भवान् शक्तिशाली स्यान्नाम । तथापि धर्मदासः इव भवतः शक्तिशालिता अपि निष्प्रयोजिका इति भाति मम । धर्मदासः महाशक्तिशाली सन्नपि न शक्तवान् स्वस्य अनुजं शक्तिशालिनं कर्तुं, न वा मातुः इच्छां पूरयितुम् । भवतः



मार्गायासपरिहाराय तस्य कथां श्रावयामि । तां श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

वीरदासः शैलपुरस्य निवासी । सः विशालस्य कृषिक्षेत्रस्य स्वामी । तस्य त्रयः पुत्राः - धर्मदासः, रामदासः, कृष्णदासः चेति । रामदासः कृष्णदासः च न बुद्धिमन्तौ । ज्येष्ठः धर्मदासः वदति स्म यत् अहं गुरुकुलं गत्वा विद्याभ्यासं कर्तुम् इच्छामि इति । किन्तु पिता वीरदासः पुत्रस्य एताम् इच्छां प्रबलतया निराकृतवान् । एतस्मात् क्रुद्धः धर्मदासः गृहं परित्यज्य गतः । वीरदासः पुत्रस्य अन्वेषणाय बहुधा प्रयासं कृतवान् । किन्तु साफल्यं न प्राप्तं तेन ।

ततः केषाञ्चित् वर्षाणाम् अनन्तरं वीरदासः नितराम् अस्वस्थः जातः । तस्य वाक्शक्तिः विलुप्ता । महान्तः वैद्याः तं परीक्ष्य उक्तवन्तः यत् एतस्य रोगस्य निवारणाय न किमपि औषधम् अस्ति इति । ततः रामदासः कृष्णदासश्च गृहव्यवहार-निर्वहणम् आरब्धवन्तौ । येषु ताभ्यां विश्वासः कृतः ते तौ वञ्चितवन्तः । अतः ताभ्यां सर्वाभ्यः दिग्भ्यः हानिः अनुभूता । कृषिक्षेत्रस्य गृहस्य च विक्रयणात् ऋते नान्या गतिः इदानीम् इति तौ चिन्तितवन्तौ ।

गृहात् निर्गतः धर्मदासः सर्वश्रेष्ठ-नामकस्य गुरुकुले अध्ययनम् आरब्धवान् । गुरोः प्रीतिपात्रतां प्राप्य सः अनेकाः विद्याः विविधाः शक्तीः च सम्पादितवान् । तासां शक्तीनां साहाय्येन सः स्वस्य गृहस्य दुरवस्थाम् अवगतवान् । गुरुं गृहस्य स्थितिं विस्तरेण उक्तवान् सः ।

सर्वं श्रुत्वा सर्वश्रेष्ठः उक्तवान् - ''भवतः विद्याभ्यासः एतावता समाप्तः अस्ति । यद्यत् शक्यं तत्सर्वं बोधितम् अस्ति मया । अन्येषां हिताय एव भवता स्वस्य शक्तेः उपयोगः करणीयः । माता गुरोः अपि श्रेष्ठा । मम आदेशस्य पालनं तदा एव भवितुम् अर्हति, यदा च एतदर्थं भवतः माता अनुज्ञां दद्यात् । अतः भवता शीघ्रम् एव इतः प्रतिगत्य गृहस्य कार्यभारः वोढव्यः । मातुः अनुज्ञाप्राप्तेः अनन्तरम् एव भवता ग्रामपरित्यागः कर्तुं शक्यः । यावत् अन्यः जनः शक्तिप्राप्तिमार्गं न बोध्यते तावत् भवता गृहं न त्यक्तव्यम्'' इति ।

गुरोः आदेशस्य अनुगुणं धर्मदासः शैलपुरं गतवान्, गृहजनेषु धैर्यं पूरयित्वा



मार्गायासपरिहाराय तस्य कथां श्रावयामि । तां श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

वीरदासः शैलपुरस्य निवासी । सः विशालस्य कृषिक्षेत्रस्य स्वामी । तस्य त्रयः पुत्राः - धर्मदासः, रामदासः, कृष्णदासः चेति । रामदासः कृष्णदासः च न बुद्धिमन्तौ । ज्येष्ठः धर्मदासः वदति स्म यत् अहं गुरुकुलं गत्वा विद्याभ्यासं कर्तुम् इच्छामि इति । किन्तु पिता वीरदासः पुत्रस्य एताम् इच्छां प्रबलतया निराकृतवान् । एतस्मात् क्रुद्धः धर्मदासः गृहं परित्यज्य गतः । वीरदासः पुत्रस्य अन्वेषणाय बहुधा प्रयासं कृतवान् । किन्तु साफल्यं न प्राप्तं तेन ।

ततः केषाञ्चित् वर्षाणाम् अनन्तरं वीरदासः नितराम् अस्वस्थः जातः । तस्य वाक्शक्तिः विलुप्ता । महान्तः वैद्याः तं परीक्ष्य उक्तवन्तः यत् एतस्य रोगस्य निवारणाय न किमपि औषधम् अस्ति इति । ततः रामदासः कृष्णदासश्च गृहव्यवहारनिर्वहणम् आरब्धवन्तौ । येषु ताभ्यां विश्वासः कृतः ते तौ वञ्चितवन्तः । अतः ताभ्यां सर्वाभ्यः दिग्भ्यः हानिः अनुभूता । कृषिक्षेत्रस्य गृहस्य च विक्रयणात् ऋते नान्या गतिः इदानीम् इति तौ चिन्तितवन्तौ ।

गृहात् निर्गतः धर्मदासः सर्वश्रेष्ठनामकस्य गुरुकुले अध्ययनम् आरब्धवान् । गुरोः प्रीतिपात्रतां प्राप्य सः अनेकाः विद्याः विविधाः शक्तीः च सम्पादितवान् । तासां शक्तीनां साहाय्येन सः स्वस्य गृहस्य दुरवस्थाम् अवगतवान् । गुरुं गृहस्य स्थितिं विस्तरेण उक्तवान् सः ।

सर्वं श्रुत्वा सर्वश्रेष्ठः उक्तवान् - ''भवतः विद्याभ्यासः एतावता समाप्तः अस्ति । यद्यत् शक्यं तत्सर्वं बोधितम् अस्ति मया । अन्येषां हिताय एव भवता स्वस्य शक्तेः उपयोगः करणीयः । माता गुरोः अपि श्रेष्ठा । मम आदेशस्य पालनं तदा एव भवितुम् अर्हति, यदा च एतदर्थं भवतः माता अनुज्ञां दद्यात् । अतः भवता शीघ्रम् एव इतः प्रतिगत्य गृहस्य कार्यभारः वोढव्यः । मातुः अनुज्ञाप्राप्तेः अनन्तरम् एव भवता ग्रामपरित्यागः कर्तुं शक्यः । यावत् अन्यः जनः शक्तिप्राप्तिमार्गं न बोध्यते तावत् भवता गृहं न त्यक्तव्यम्'' इति ।

गुरोः आदेशस्य अनुगुणं धर्मदासः शैलपुरं गतवान्, गृहजनेषु धैर्यं पूरयित्वा

आशाभावं जनितवान् च । कृषिविषये रामदासस्य यथायोग्यं मार्गदर्शनं कृतवान् । कृष्णदासद्वारा धान्यापणस्य आरम्भः तेन कारितः । तस्मिन् वर्षे क्षेत्रे फलसमृद्धिः प्राप्ता, आपणे उत्तमं विक्रयणं जातम् । अतः लाभः प्राप्तः । तस्मात् ग्रामजनाः भावितवन्तः यत् धर्मदाससमीपे विशिष्टा शक्तिः अस्ति इति । धर्मदासस्य माता अपि ग्रामजनानां वचने विश्वासं प्राप्तवती । अतः कदाचित् सा पुत्रम् उक्तवती - ''वत्स ! गृहं परित्यज्य गतः भवान् अपूर्वाः शक्तीः सम्पाद्य आगतः । तासां शक्तीनां साहाय्येन भवता पितुः रोगः अपनेतव्यः । तेन वाक्शक्तिः पुनः प्राप्येत'' इति ।



''अम्ब ! पितुः रोगस्य अपनयनार्थं विद्युद्द्वीपे स्थितस्य तुलसीसस्यस्य मूलम् आवश्यकम् । मम गुरोः आज्ञा अस्ति यत् सकृत् ग्रामः परित्यक्तः चेत् पुनः ग्रामं प्रति न आगन्तव्यम् इति । अतः अहम् आत्मना सह कृष्णदासम् अपि नयामि । प्रयाणसमये तं शक्तिमन्तं करिष्यामि । तस्य द्वारा तुलसीमूलं प्रेषयिष्यामि । भवत्याः अनुज्ञा अस्ति चेत् एतदर्थं गमिष्यामि'' इति अवदत् धर्मदासः ।

तदा माता अवदत् - ''भवतः पितुः स्वास्थ्यलाभः यावत् न भवति तावत् महती सम्पत्तिः प्राप्ता चेदपि न किमपि प्रयोजनम् । अतः भवान् अनुजेन सह विद्युद्द्वीपं गच्छतु । अनन्तरम् अपि गुरोः आज्ञायाः पालनाय भवता अन्यत्र न गन्तव्यम्, अपि तु गृहमेव प्रत्यागन्तव्यम्'' इति ।

ततः धर्मदासः कृष्णदासेन सह गृहात् निर्गतवान् । ग्रामात् बहिः आगत्य कृष्णदासः अवदत् - ''अग्रज ! भवति अपूर्वाः शक्तयः सन्ति । ताः मया अपि यथा प्राप्येरन् तथा करोतु कृपया'' इति ।

''मम शक्तीनां विषये भवतः विश्वासः यदि स्यात् तर्हि विद्युद्द्वीपप्राप्तितः पूर्वं ताः भवता प्राप्येरन्'' इति अवदत् धर्मदासः ।

अत्रान्तरे कश्चन वृषभशकटः तयोः समीपम् आगतः । शकटस्वामी जनकः शकटं स्थगितवान् । तदा धर्मदासः कृष्णदासम् उद्दिश्य - ''विद्युद्द्वीपप्राप्तिपर्यन्तं भवता शकटस्य आरोहणं न करणीयम् । अतः पादाभ्याम् आगच्छतु भवान्'' इति उक्त्वा शकटम् आरूढवान् ।

कृष्णदासः अर्धदिनं यावत् प्रयाणं कृतवान् । मध्येमार्गं वृक्षस्य अधः उपविष्टः



अग्रजः तेन दृष्टः । सः नितरां श्रान्तः आसीत् । महती बुभुक्षा अपि आसीत् तस्य । अत्रान्तरे शैलपुरं प्रत्यागच्छन् वामनः तत्र आगत्य – ''महती बुभुक्षा मम । एकाकी न खादामि अहम् । मिलित्वा भोजनं करवाम'' इति वदन् स्कन्धस्थम् आहार-बन्धम् अधः स्थापितवान् । तत्र विविधानि खाद्यानि दृष्टानि ।

तदा धर्मदासः अवदत् – ''अहम् अनुजं महतः पुण्यकार्यस्य निमित्तं नयन् अस्मि । कार्यसमाप्तिपर्यन्तं तेन उपवासः करणीयः'' इति । ततः सः वामनेन सह भोजनम् अकरोत् । किञ्चिदनन्तरं वामनः ततः निर्गतवान् । तदा धर्मदासः अनुजम् अवदत् – ''अन्धकारप्रसारः आरब्धः अस्ति । पूर्णोदरम् आहारसेवनात् महती निद्रा मां बाधते । भवता कार्यसिद्धिपर्यन्तं निद्रा अपि न करणीया । अतः अहं निद्रां करोमि । भवान् जागरितः तिष्ठन् रक्षणकार्यं करोतु । एतेन एव उभयोः अपि श्रेयः'' इति ।

कृष्णदासः आरात्रि जागरणं कृतवान् । धर्मदासः प्रातः जागरितः । उभौ अपि ततः निर्गतवन्तौ । किञ्चिद्दूरं गमनानन्तरं ताभ्यां काचित् नदी प्राप्ता । नद्यां नौका काचित् आसीत् । किन्तु नाविकः न आसीत् । नद्याः मध्ये अकस्मात् विद्युत् स्फुरिता । तां दर्शयन् धर्मदासः अवदत् – ''सः एव विद्युद्द्वीपः नाम । दिने बहुवारं सः विद्योतते । अतः विद्युद्द्वीपः इति तस्य नाम'' इति ।

तावता नाविकः तत्र आगतः । सः तौ अवदत् – ''अहं विद्युद्द्वीपं गच्छन् अस्मि । यदि इच्छा तर्हि भवन्तौ उभौ अपि मया सह आगन्तुम् अर्हतः'' इति ।

तदा धर्मदासः अनुजम् अवदत् – ''भवान् पितुः नाम स्मरन् तरन् आगच्छतु । अहं तत्र भवतः प्रतीक्षां करिष्यामि'' इति ।

प्रतिवचनं किमपि अवदन् कृष्णदासः अग्रजस्य आदेशस्य अनुगुणं नदीं प्रविश्य तरणम् आरब्धवान् । द्वीपप्राप्तिसमये सः श्रान्तः, सम्भाषणासमर्थः च आसीत् ।

कृष्णदासः किञ्चित्कालं विश्रान्तिं प्राप्तवान् । ततः उभौ अपि तुलसीसस्यस्य अन्वेषणाय उद्युक्तौ । तत्र कुद्दालेन कस्यचित् सस्यस्य उन्मूलने उद्युक्तः शैलपुरवासी गोपीनाथः ताभ्यां दृष्टः । सः एतयोः आगमनस्य उद्देशं ज्ञात्वा सस्योन्मूलनाय कुद्दालं दत्तवान् ।

यदा कृष्णदासः कुद्दालं स्वीकर्तुं हस्तं प्रसारितवान् तदा धर्मदासः अवदत् - ''हस्ताभ्याम् एव खननं कृत्वा तुलसीसस्यं प्राप्तव्यम् अस्ति । एतस्य नियमस्य उल्लङ्घनं न उचितम्'' इति ।

ताभ्यां तत्र बहूनि तुलसीसस्यानि दृष्टानि । हस्तयोः वेदना जायमाना अस्ति चेदपि ताम् उपेक्ष्य कृष्णदासः हस्ताभ्याम् एव खननं कृत्वा तुलसीमूलम् उन्मूलितवान् । अनुजस्य श्रमस्य प्रशंसां कुर्वन् धर्मदासः अवदत् - ''भवतः पितृभक्तिः प्रशंसार्हा एव । यदि मयि स्थितासु शक्तिषु भवतः विश्वासः अस्ति तर्हि तासाम् अर्धभागः भवता प्राप्स्यते । तदा भवान् वायौ डयमानः गृहं प्राप्तुम् अर्हति'' इति ।



किन्तु बहुधा प्रयत्नेन अपि कृष्णदासः वायौ उड्डयने समर्थः न जातः । तदा धर्मदासः दीर्घं निश्वस्य अवदत् - ''मयि स्थितासु शक्तिषु भवतः विश्वासः नास्ति इति भाति । सौभाग्यवशात् पितुः चिकित्सायाम् उपकारकं तुलसीमूलं भवता प्राप्तम् अस्ति । गृहं प्रतिगत्य एतत् पित्रे दत्त्वा तं रोगविमुक्तं, सम्भाषणसमर्थं च करोतु । अहं गुरोः आज्ञायाः पालनाय गच्छन् अस्मि'' इति ।

ततः तौ पृथक् जातौ । कृष्णदासः उत्साहेन गृहम् आगतवान् । तुलसीमूलस्य सेवनात् वीरदासः रोगविमुक्तः सम्भाषणसमर्थः च जातः । कृष्णदासः अचिन्तयत् यत् तुलसीमूलस्य आनयनाय मया यत् कष्टम् अनुभूतं तत् जनकः, वामनः, गोपीनाथः च यदि स्वयं वर्णयन्ति तर्हि मम गौरवं वर्धिष्यते इति । अतः सः तान् त्रीन् अपि गृहं प्रति आनायितवान् ।

''धर्मदासः न सामान्यः । तेन कृतं वायौ सञ्चारम् अहं स्वयं दृष्टवान् अस्मि । मम प्राप्तितः पूर्वम् एव सः वृक्षमूलं प्राप्तवान् आसीत्'' इति उक्तवान् जनकः ।

स्वस्य कष्टस्य विवरणं श्रोतुम् इष्टवान् कृष्णदासः धर्मदासस्य स्तुतिं श्रुत्वा आश्चर्यम् अनुभवन् यावत् किमपि वक्तुम् उद्युक्तः तावता वामनः अवदत् - ''ग्रामं प्रति आगमनसमये मया वृक्षस्य अधः धर्मदासः दृष्टः । तस्य पुरतः मया आहारग्रन्थिः उद्घाटितः । तत्र मया अनानीतानि बहूनि खाद्यानि आसन्'' इति ।

तदा गोपीनाथः अवदत् - ''कृष्णदासः नौकया यदा प्रत्यागच्छन् आसीत् तदा धर्म-

दासः जलस्य उपरि चलन् आगच्छन् दृष्टः मया'' इति ।

एतत्सर्वं श्रुत्वा कृष्णदासः नितराम् आश्चर्यचकितः । अन्यैः यत् अभिज्ञातं तत् मया न अभिज्ञातं खलु इति नितरां खिन्नः अभवत् सः । 'मम स्वार्थस्य अहङ्कारस्य च कारणतः एतत्सर्वं प्रवृत्तम्' इति स्वगतं वदन् पश्चात्तापम् अनुभूतवान् सः । तदनन्तरक्षणे एव आत्मनि कासाञ्चित् शक्तीनां प्रवेशः जायमानः अस्ति इति अनुभवः तेन प्राप्तः ।

वेतालः एवं कथां समाप्य अवदत् - ''अये राजन् ! कृष्णदासः अग्रजे स्थिताः शक्तीः न अवगतवान् यत् तत्र तदीयः अहङ्कारः स्वार्थः च एव किं कारणम् ? गृहं प्रत्यागच्छेत् पुत्रः इति आशयः आसीत् खलु मातुः ? तथापि धर्मदासः किमर्थं न प्रत्यागतः ? किमर्थं मातुः आदेशः तेन धिक्कृतः ? धर्मदासः अन्यत्र किमर्थं निर्गतवान् ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''धर्मदासः अनुजाय कृष्णदासाय शक्तेः अर्धभागम् अर्पयितुम् ऐच्छत् । तदर्थं सर्वविधाः प्रयत्नाः अपि तेन कृताः । किन्तु अग्रजस्य शक्तिषु कृष्णदासस्य विश्वासः न आसीत् । तुलसीमूलस्य आनयनाय यदा धर्मदासः तं चितवान् तदा एव तस्मिन् अहङ्कारः उत्पन्नः । अतः एव सः अग्रजे स्थितानां शक्तीनाम् अभिज्ञानं न प्राप्तवान् । गुरोः आज्ञां पालयता पुत्रेण दूरं न गन्तव्यम् इति मातुः इच्छा आसीत् । अतः सा तुलसी-मूलस्य आनयनाय पुत्रं प्रेषयितुं सिद्धा सती अपि पुत्रस्य अप्रत्यावर्तनं न इष्टवती । अतः एव 'अवश्यं प्रत्यागन्तव्यम्' इति सा पुत्रम् उक्तवती । किन्तु धर्मदासः लोककल्याणम् इच्छन् गृहात् निर्गतः । ततः पूर्वं सः गृहभारं सम्यक् एव निरूढवान् आसीत् । यद्यपि तेन मातुः इच्छा न पूरिता, तथापि तत् अपराधाय तु न । यतः उच्चं लक्ष्यं मनसि निधाय गृहात् निर्गतम् आसीत् तेन'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः सन् वृक्षशाखाम् अवलम्बितवान् ।








## दासवंशीयाः शासकत्वेन

चक्रवर्तिनः कलीफ-सुल्तान-नवाबपदवाच्याः च देशस्य राज्यस्य वा शासनं कृतवन्तः इति तु सर्वे जानन्ति एव । दासवंशेन अपि एषः देशः कदाचित् शासितः जातः इति किं भवन्तः जानन्ति ? दासवंशशासनस्य आरम्भः इत्थं जातः - ११९२ तमे वर्षे अपघानिस्तानीयः महमदघोरिः पञ्जाब-राज्यम् आक्रान्तवान् । किन्तु सः अत्र स्थातुं न ऐच्छत्, प्रत्युत स्वदेशं प्रतिगन्तुम् ऐच्छत् । अतः सः दासवंशीयं स्वस्य विश्वासपात्रभूतं कुतबुदीन-अयबाकं शासकत्वेन अचिनोत् । कुतबुदीनः देहलीजये विशेषपात्रम् ऊढवान् आसीत् । कुतबुदीनः तद्वंशीयाः च त्रिशताधिकवर्षाणि यावत् शासनम् अकुर्वन् । सः वंशः एव 'दासवंशः' इति ख्यातः । अयं कुतबुदीनः एव स्वस्य विजयस्य सङ्केतरूपेण ७७मीटरुन्नतं कुतबमिनारनामकं विजयस्तम्भं निर्मापितवान् ।

## रुद्राक्षाः कल्पयन्ति प्रसिद्धिं शुभोदर्कं च



रुद्राक्षस्य आध्यात्मिकम् औषधीयं च महत्त्वम् ऐदम्प्राथम्येन प्रपञ्चं ज्ञापितवन्तः संन्यासिनः विरागिणः वा । रुद्राक्षाः प्रायः रक्तधूसरवर्णोपेताः भवन्ति । धातुनिर्मितं तन्तुं रुद्राक्षाणां मध्ये योजयित्वा माला निर्मीयते । सा च माला कण्ठे ध्रियते प्रायः । याः रेखाः (मुखानि) भवन्ति तासाम् आधारेण रुद्राक्षेषु वैविध्यं परिकल्प्यते । पञ्चमुखः रुद्राक्षः प्राचुर्येण प्राप्यते । एकविंशतिमुखः अतिविरलः । एकमुखः रुद्राक्षः शुभोदर्कं प्रसिद्धिं च कल्पयति इति जनाः भावयन्ति । चतुर्मुखः विद्याभ्यासनैपुण्यं कल्पयति इति वचनं श्रूयते । त्रिमुखः रुद्राक्षः आरोग्यकारकः इत्यस्ति जनानां विश्वासः ।

अन्यदेशीयकथावली (मलेशियादेशीया)

# निसर्गप्रियतायाः फलम्

अङ्क्लाशः कश्चन निर्धनः तरुणः । कदाचित् भोजनाय किमपि न प्राप्तं तेन । अतः सः बुभुक्षायाः निवारणाय अरण्यं गतवान् । तत्र कश्चन महावृक्षः दृष्टः तेन । सः वृक्षः उन्नतः स्वादुफलोपेतः च आसीत् । किन्तु तानि फलानि उन्नतासु शाखासु दृश्यन्ते स्म । वृक्षः स्थूलः दीर्घप्रकाण्डोपेतः च आसीत् इत्यतः तस्य आरोहणं तु असाध्यम् एव आसीत् ।

फलानि कथं प्राप्तव्यानि इति अङ्क्लाशः



यावत् चिन्तयन् आसीत् तावता कश्चन ध्वनिः श्रुतः - 'वृक्षस्य मूले खननात् भवता अपूर्वं किमपि प्राप्स्यते' इति । अङ्क्लाशः वृक्षमूले खननं कृतवान् । तेन एकं सुवर्णपिण्डं लब्धम् । तत् स्वीकृत्य अङ्क्लाशः नगरं गतवान् । तस्य कश्चित् भागं विक्रीय धनं प्राप्य तेन धनेन सः शकटम्, आहारवस्तूनि, गृहोपयोगिवस्तूनि च क्रीत्वा कुटीरं प्रति गतवान् ।

अनन्तरदिने एव सः अरण्यसमीपे स्थिते स्थले गृहस्य निर्माणाय कांश्चन कर्मकरान् नियोजितवान् । अल्पे एव काले प्रासादसदृशं गृहं निर्मितम् अभवत् । यदा यदा आवश्यकता भवति तदा तदा सः रहसि अरण्यं गत्वा वृक्षमूलस्थं सुवर्णम् आनयति स्म । गृहनिर्माणं यदा समाप्तं तदा सः अचिन्तयत् यत् मम गृहं परितः अन्येषाम् अपि गृहं यदि स्यात् तर्हि वरं भवेत् इति । अतः तत्प्रदेशे गृहस्य निर्माणाय सः बहुभ्यः धनं दत्तवान् । तस्मात् तत्र किञ्चन विशालम् उपनगरम् एव निर्मितं जातम् ।

अङ्क्लाशः गृहे बहून् सेवकान् नियोजित-वान् । सुन्दरी काचित् परिणीता अपि तेन । सुन्दरः पुत्रः, सुन्दरी पुत्री चापि प्राप्ते । तदीयानि दिनानि सन्तोषेण गतानि ।

तत्प्रदेशस्य राजा कदाचित् अचिन्तयत् - 'अङ्क्लाशः स्वयं राजा भवेत् अपि कदाचित् । अतः एतस्य उत्तराधिकारी कोऽपि यथा न भवेत् तथा करणीयम् । तस्मात् तस्य मरणस्य अनन्तरं तस्य गृहं, सम्पत्तिः इत्यादिकम् अहं मदधीनं कर्तुं

शिक्ष्यामि' इति। अतः सः स्वस्य उभौ आस्थानिकौ एतदर्थम् अङ्काशसमीपं प्रेषितवान्। तौ तु कुतन्त्रनिपुणौ। तौ गुप्तचराणां साहाय्येन अङ्काशस्य प्रियम् अश्वं चोरयित्वा वने बद्धवन्तौ। अश्वस्य अदर्शनताकारणतः यावत् अङ्काशः चिन्ताक्रान्तः आसीत् तावता एतौ तत्समीपं गत्वा उक्तवन्तौ यत् आवां ज्योतिषनिपुणौ इति। अङ्काशेन अश्व-विषये प्रश्नः कृतः। तौ यत् स्थलं सूचितवन्तौ तत्र अन्वेषणेन अश्वः अङ्काशेन प्रतिप्राप्तः।

एतस्मात् तयोः विश्वासं प्राप्तवान् अङ्काशः अपृच्छत् - ''केन उपायेन मम पुत्रस्य कर्मेशस्य पुत्र्याः पुष्पनीलायाः च भाविजीवनम् उज्ज्वलं भवेत् ?'' इति।

तदा तौ अवदताम् - ''एतयोः कारणतः भवतोः, समीपस्थानां च नाशः भविष्यति। अतः अरण्ये एतयोः त्यागः वरम्'' इति।

अङ्काशः महता खेदेन एव एतं प्रस्तावम् अङ्गीकृतवान्। ततः कस्यचित् सस्यस्य रसस्य दानेन तौ बालौ दीर्घनिद्रां गमितौ। रात्रौ अश्वेन तौ अरण्यं नीतौ, अरण्यपार्श्वे स्थिते समुद्रतीरे शिलाफलकस्य उपरि शायितौ च।

सूर्यकिरणानां स्पर्शात् कर्मेशः पुष्पनीला च जागरितौ। अदृष्टपूर्वस्य तस्य स्थलस्य दर्शनात् तौ किञ्चिदपि न भीतौ। प्रत्युत सूर्यकिरणानां सुवर्णवर्णीयानां समुद्रतरङ्गाणां च दर्शनात् तौ नितरां सन्तुष्टौ।

''आवयोः अपूर्वं रोमाञ्चं जनयितुम् एव मातापितरौ एवं कृतवन्तौ स्याताम्'' इति अवदत् कर्मेशः।

''तत्र पश्यतु पुष्पाणां रमणीयताम्। एतादृशम् अपूर्वं सौन्दर्यं किं भवता इतः पूर्वं दृष्टम् ?'' इति पृष्टवती पुष्पनीला।



''तत्र पश्यतु समुद्रम्। पुष्पाणां यावत् तावदेव अपूर्वं सौन्दर्यं समुद्रतरङ्गाणाम् अपि। वृक्षगुल्मादयः अपि अत्रत्याः चित्ताकर्षकाः'' इति अवदत् कर्मेशः।

ततः तौ विविधानां स्वादूनां फलानां खादनेन उदरं पूरितवन्तौ, निर्झरीणां स्वच्छशीतलजलस्य पानेन पिपासां निवारितवन्तौ च। सायङ्कालः सम्प्राप्तः। तौ अरण्यं प्रति प्रस्थितवन्तौ। ''आवां कुत्र स्वः इति पित्रा प्रेषितः जनः प्रायः न जानाति इति मन्ये'' इति उक्तवती पुष्पनीला।

गच्छतोः तयोः पुरतः कौमुदी प्रसृता। ''अहो, अपूर्वं सौन्दर्यम् !'' इति साश्चर्यम् उक्तवन्तौ तौ। तावता ताभ्यां किञ्चन मायागृहं प्राप्तम्। यदा तस्य समीपं तौ गतवन्तौ तदा मधुरः कोमलः कश्चन ध्वनिः श्रुतः - ''अन्तः आगत्य खाद्यपदार्थान् सेवताम्। विश्रान्त्यर्थं शय्या अपि सज्जा अस्ति'' इति।



तदनन्तरक्षणे एव अरण्ये सिंहगर्जनं श्रुतम् । कश्चन घोरः सिंहः आगत्य चोरनायकम् आकृष्य अनयत् ।

पुनः परिसरः शान्तः जातः । कर्मेशः पुष्पनीला च अपगतभयौ जातौ । 'निसर्गप्रियता एव आवयोः रक्षणम् अकरोत्' इति तौ चिन्तितवन्तौ । ततः तौ समुद्रतीरं गतवन्तौ । तत्र काचित् नौका आसीत् । नाविकादयः प्रस्थानसन्नाहं कुर्वन्तः आसन् ।

''आवयोः आतिथ्यं कल्पयन् भवान् कः ?'' इति अपृच्छत् कर्मेशः ।

''अहमस्मि निसर्गदेवः । भवन्तौ निसर्गे प्रीतिमन्तौ । समुद्रे परिसरे च स्नेहवन्तौ । अतः अहं भवतोः विषये नितरां सन्तुष्टः अस्मि । अहं कञ्चित् वरं दातुम् इच्छामि । भवन्तौ वरत्वेन निसर्गप्रियताम् इच्छतः, उत सुवर्णराशिम् ?'' इति पृष्टवान् निसर्गदेवः ।

''निसर्गप्रियताम् एव'' इति उक्तवन्तौ तौ ।

''अस्तु । निसर्गः सदापि भवतोः विषये मैत्र्या व्यवहरिष्यति'' इति अवदत् निसर्गदेवः ।

''अनुगृहीतौ स्वः'' इति उक्त्वा तौ शयनं कृतवन्तौ, गाढनिद्रां प्राप्तवन्तौ च । यदा प्रातः उत्थितं तदा ताभ्यां गृहं न दृष्टं, प्रत्युत केचन लुण्ठाकसदृशाः जनाः दृष्टाः । तेषां नायकः कठोरस्वरेण तौ अवदत् - ''अये ! भवन्तौ अस्माकं दासौ'' इति ।

''न आवां दासौ । अहं भवतः आज्ञां न पालयामि'' इति धैर्येण अवदत् कर्मेशः ।

''मम आज्ञा न पाल्यते ? दुष्ट ! कियत् धार्ष्ट्यं भवतः ?'' इति वदन् तीक्ष्णां छुरिकां हस्तेन गृहीत्वा कम्पितवान् लुण्ठाकनायकः ।

तान् दृष्ट्वा कर्मेशः अरण्यं प्रति कथम् आगतम् इति निवेद्य स्वग्रामस्य लक्षणानि अपि विवृत्य अपृच्छत् - ''किं भवन्तः आवां मातापित्रोः समीपं नेतुम् अर्हन्ति ?'' इति ।

''अहं भवन्तौ ग्रामं प्रापयिष्यामि'' इति अवदत् नाविकनायकः । ततः कर्मेशः पुष्पनीला च नौकाम् आरूढवन्तौ । यदा नौका किञ्चिद्दूरं गता तदा सः नाविकनायकः उच्चैः हसन् अवदत् - ''अहम् एतां परिणेतुम् इच्छामि । भवान् मम दासः भवेत्'' इति ।

''अहं भवतः परिणयं न इच्छामि'' इति क्रोधेन अवदत् पुष्पनीला । तस्मात् क्रुद्धः नाविकनायकः ताम् उन्नीय समुद्रे क्षिप्तवान् । झटिति कश्चन शार्क्मीनः ताम् अगिलत् ।

''भवान् मम दासः स्यात् । अन्यथा भवन्तं मारयिष्यामि'' इति अवदत् नाविकनायकः । तावता समुद्रे महातरङ्गाः उत्पन्नाः । तस्मात् नौका भग्ना । सर्वे जले निमग्नाः सन्तः गतप्राणाः जाताः । कर्मेशः किञ्चन काष्ठफलकं प्राप्य सजीवम् अतिष्ठत् । कश्चन डाल्फिनः तत् काष्ठफलकं नुदन् तीरम् अनयत् ।

कर्मेशः यदा सचेतनः जातः तदा तस्य पार्श्वे काचित् वृद्धा दृष्टा । सा तम् अवदत् - "वत्स ! त्रिभ्यः दिनेभ्यः पूर्वं समुद्रतीरे पतितः भवान् मया दृष्टः । भगवता एव भवान् मह्यं दत्तः । मम बन्धुः अन्यः कोऽपि नास्ति लोके । भवान् मम गृहे एव वसतु" इति ।

कर्मेशः एतं प्रस्तावम् अङ्गीकृतवान् । शार्क्मीनेन कृतं भगिन्याः निगरणं सदा तस्य नेत्रयोः पुरतः नृत्यति स्म ।

स्वस्य दुःखं कथमपि निगूहन् सः वृद्धायाः कुटीरं परितः स्थिते प्रदेशे उद्यानस्य निर्माणे उद्युक्तः जातः । बहवः वृक्षाः अपि तेन वर्धिताः । एवमेव वर्षम् अतीतम् ।

"वत्स ! सद्यः एव सिंहासनम् आरूढवतः राजकुमारस्य विवाहः भविष्यति इति श्रूयते । वधूवरयात्रा अतिरमणीया भवति" इति अवदत् वृद्धा । तस्याः यात्रायाः दर्शनाय कर्मेशः राजधानीं गतवान् । राजभटाः घोषितवन्तः यत् ये एतद्देशीयाः न ते विशेष-दर्शनस्थलं प्रति आगन्तुम् अर्हन्ति इति ।

कर्मेशः तत् विशेषस्थलं गतवान् । विशेषतया अलङ्कृतः वधूयुक्तः रथः मार्गे गच्छन् आसीत् । कर्मेशं दूरात् एव दृष्ट्वा वधूः उच्चस्वरेण अवदत् - "अहो, मम भ्राता तत्र !" इति । भटाः झटिति जनान् अप-सारयन्तः कर्मेशसमीपम् आगत्य तं वधूसमीपं नीतवन्तः । समीप-दर्शनात् कर्मेशः अवगतवान् यत् या शार्क्मीनेन गीर्णा सा एव एषा इति ।

शार्क्मीनः तां निगीर्य तीरम् आगत्य उद्वमनं कृतवान् आसीत् । प्रातःकाले वायुसञ्चारार्थम् आगतः राजकुमारः तां स्वस्य प्रासादं प्रति नीतवान् आसीत् । तस्याः भ्रातुः अन्वेषणाय राजकुमारेण प्रयासः कृतः । तथापि साफल्यं न लब्धम् । एवमेव वर्षम् अतीतम् । एतदभ्यन्तरे राजकुमारः तस्याम् अनुरक्तः जातः । 'भवत्याः भ्रातुः अन्वेषणाय प्रयत्नं निरन्तरं करिष्यामि' इति प्रतिज्ञाय राजकुमारः पुष्पनीलायाः पुरतः परिणयेच्छां प्रकटितवान् आसीत् ।

विवाहस्य अनन्तरं कर्मेशः राज्ञः प्रधान-सहायकत्वेन नियुक्तः जातः । तदीयौ मातापितरौ अपि अन्विष्टौ । दुष्टः राजा तौ निर्धनौ कृतवान् आसीत् । कर्मेशः तौ स्वगृहम् आनीतवान् । ततः महता सैन्येन सह गत्वा तस्य दुष्टस्य राजधानीम् आक्रम्य तं पराजित्य तदीयं सिंहासनं वशीकृतवान् ।

"निसर्गप्रियता एव आवयोः एतस्याः उत्तमस्थितेः कारणम् । एवं ननु ?" इति महता सन्तोषेण परस्परम् उक्तवन्तौ कर्मेशः पुष्प-नीला च ।



# वार्ताविशेषः

## महता व्ययेन रच्यन्ते चित्राणि



एम्. एफ्. हुसेन् इत्येतत् नाम प्रायः सर्वे जानन्ति एव । कलाकारः सः इदानीं विविधानां चित्राणां निर्माणे निमग्नः । एतदर्थं तस्मै एतावता एव १०१ कोटिरूप्यकाणि दत्तानि सन्ति अपि । एतं महान्तं धनराशिं दत्तवान् अस्ति मुम्बयीस्थः तन्त्रशास्त्रज्ञः स्वरूप-श्रीवास्तवः । प्राप्त-ऐ.टि.ऐ.पदवीकः चीनादशं प्रति हाङ्ग्काङ्ग् प्रति च असंस्कृतायसः विक्रयणे च प्रवृत्तः सः हुसेनीयानि चित्राणि न इच्छति गृहशोभायै, अपि तु तेषां विक्रयणं कृत्वा लोकहितकार्यं करणीयम् इति उद्देशेन ।

## ताजभवनस्य अपायः

ताजभवनं ३५० वर्षेभ्यः पूर्वं निर्मितम् । तस्य ३५० तमं वर्षं सवैभवम् आचरणीयम् इति सर्वकारेण सङ्कल्पः कृतः अस्ति । जगति स्थितेषु अत्याश्चर्यकरेषु सप्तसु अंशेषु अन्यतमम् अस्ति एतत् भवनम् । एतस्य भवनस्य चत्वारः शिखरस्तम्भाः सन्ति । यमुनानद्यभिमुखं स्थितौ उभौ स्तम्भौ पञ्चाशतः वर्षेभ्यः पूर्वम् एव वक्रीभवनं प्राप्तवन्तौ आस्ताम् । राजस्थानविश्वविद्यालयस्य प्राध्यापकः रामनाथवर्यः अभिप्रैति यत् गतेषु केषुचित् वर्षेषु एतत् वक्रीभवनं वर्धमानम् अस्ति इति । यमुनानद्यां जलस्य न्यूनता एव एतस्य कारणम् इति वदति सः । भवनस्य आधारभूमेः उपरि नद्याः प्रभावः महान् अस्ति इति तस्य आशयः । ते शिखरस्तम्भाः मुख्यभवनस्य उपरि यथा न पतेयुः तथा, निर्माणकाले एव तेषां शिखरे विशिष्टा रचना उपकल्पिता अस्ति ।

# Fun Center

**cream Biscuits**



## CROSSWORD



**CLUES**

ACROSS
1. Michael Jordan's game
7. Cat's love it
8. Also called soccer
9. Andre Agassi's first love
10. Mahabaleshwar's fruit

DOWN
1. This ice cream flavour melts in your mouth
2. Have biscuits with this
3. It takes two hands to ____ the cream
4. Chocolate with sugar crumbs
5. Good on the road, great on ice
6. Aamir Khan won this race
10. Munch

Hint: All that's to do with Fun Center

## Interesting Facts

The world's highest cricket ground is in Chail, Himachal Pradesh.

The flea can jump 350 times its body length. It's like a human jumping the length of a football field.

Tennis was played at the Olympics until 1924, then reinstituted in 1988.

Cranberries are sorted for ripeness by bouncing them; a fully ripened cranberry can be dribbled like a basketball.

## Enhance your vocab

Words that should appear in the dictionary but don't

Aeroma: The odour emanating from an exercise room after an aerobics workout.

FunCenter: Anything yummy that gets even better when you reach the middle.

Choctasy: The joy of discovering a second layer of chocolate underneath the first.

Keyfruit: The one apple, pear or orange in the stand that, when removed, causes all others to tumble forward.

Phonesia: The affliction of dialing a phone number and forgetting whom you were calling just as they answer.

P-Spot: The area directly above the urinal in public washrooms that men stare at knowing a glance in any other direction would arouse suspicion.



Bourbon

Butterscotch

Milk

Strawberry



## हरियाणराज्यीया जानपदकथा

# नृत्यमेव दण्डनम् आसीत्

हिरालालः नाम कश्चन बालकः पूर्वम् आसीत् । तस्य मातापितरौ कस्यचित् भूस्वामिनः क्षेत्रे कार्यं कुरुतः स्म । तौ उभौ अपि कदाचित् अशनिकारणात् दिवं गन्तौ । यदा तौ दिवं गन्तौ तदा हिरालालः दशवर्षीयः बालकः आसीत् । तं दृष्टवति भूस्वामिनि करुणा उत्पन्ना । सः तं बालकं स्वगृहे अस्थापयत् ।

भूस्वामिनः पत्नी दयालुः एव । अतः सा पत्युः एतं निर्णयम् सहर्षम् अङ्गीकृतवती । तया गृहकार्यकरणाय कश्चन सहायकः लब्धः अभवत् । सा तम् अनेकानि गृहकार्याणि वदति स्म । बालकः अपि तया यत् कार्यं दत्तं तदा सम्यक् करोति स्म । दिने त्रिवारं तस्मै आहारः दीयते स्म । भूस्वामिनः गृहस्य जनाः यदा विश्रान्तिं स्वीकुर्वन्ति तदा एव बालकेन अपि विश्रान्तिः प्राप्यते स्म ।

एवमेव वर्षद्वयम् अतीतम् । हिरालालः ज्येष्ठः बलवान् च जातः । तस्य मातापित्रोः मरणस्य अनन्तरं क्षेत्रकार्याय भूस्वामिना उभौ कर्मकरौ योजितौ आस्ताम् । तौ तस्मात् निष्कास्य हिरालालम्, अन्यं कञ्चित् बालकं च तस्मिन् कार्ये नियोजितवान् भूस्वामी ।

हिरालालः प्रातःकालतः सायङ्कालपर्यन्तं निरन्तरं कार्यं करोति स्म । प्रातःकाले क्षेत्रं प्रति प्रस्थानात् पूर्वं, मध्याह्ने भोजनसमये च अल्पा विश्रान्तिः भवति स्म तस्य । परन्तु अपरः बालकः सदा अलसः भवति स्म । सः वृक्षस्य अधः उपविश्य यद् गृहात् आनीतं



तत् चर्वति स्म ।

कानिचन दिनानि अतीतानि । 'हिरालालः सर्वं कार्यं करोति एव' इति चिन्तयन् अपरः बालकः आदिनं शयनं करोति स्म प्रायः । 'एतत् सर्व भूस्वामिनं वदामि चेत् सम्यक्



न। अतः अहं भूस्वामिनः क्षेत्रे कार्यं न करोमि। अहम् अन्यत्र गत्वा स्वतन्त्रतया कार्यं चिन्तयिष्यामि' इति निश्चितवान् हिरालालः।

अतः एकस्मिन् प्रातःकाले सः वस्त्रं सर्वं प्रयाणाय सज्जीकृत्य एव क्षेत्रम् आगतवान्। तत्र आगतः भूस्वामी हिरालालं दृष्ट्वा नितराम् आश्चर्यचकितः। हिरालालः सामान्यवेषेण न आसीत्। वस्त्रस्य बन्धं स्कन्धे स्थापितवान् आसीत् सः।

हिरालालस्य स्कन्धे हस्तं स्थापयित्वा भूस्वामी पृष्टवान् - ''किम् एतत् ? इतः कुत्र गम्यते भवता ?'' इति।

''आर्य ! भवान् पञ्च वर्षाणि मां सम्यक् पोषितवान् अस्ति। इदानीम् अहं स्वस्य जीवनं स्वयं निर्वोढुम् इच्छामि। परन्तु कदाचिदपि भवतः उपकारं तु न विस्मरामि'' इति उक्तवान् हिरालालः।

''तत् भवतु। इदानीं कुत्र गच्छति भवान् ? तद् आदौ वदतु'' इति उक्तवान् भूस्वामी स्वस्य आघातं, निराशतां च नियन्त्रयन्।

''मान्य ! अहं वाराणसीं गत्वा तत्र उद्योगम् अन्विष्यामि। वाराणसी बृहत् नगरम् इति मया श्रुतम्। तत्र कार्यस्य अन्वेषणं कष्टाय न भवेत्'' इति अवदत् हिरालालः।

''हिरालाल ! वाराणसी तु इतः सुदूरे अस्ति। तत्र गन्तुं बहूनि दिनानि आवश्यकानि भविष्यन्ति। वाराणसीप्राप्तिं यावत् भवतः जीवननिर्वहणं कथं भवेत् ?'' इति अपृच्छत् भूस्वामी।

''अहं तत् सर्वं चिन्तितवान् अस्मि। भवान् मम पञ्चानां वर्षाणां वेतनं यदि दद्यात् तर्हि मम महान् उपकारः भवेत्'' इति उक्तवान् हिरालालः।

'भूस्वामी किञ्चित् विचिन्त्य पृष्टवान् - ''भवान् इतः गमनं किं निश्चितवान् एव ?'' इति।

''सत्यं महोदय ! अहम् इतः गमनाय दृढां मतिं कृतवान् एव अस्मि'' इति मन्दस्वरेण उक्तवान् हिरालालः।

''अस्तु'' इति उक्त्वा भूस्वामी अन्तः गत्वा पञ्च रजतनाणकानि आनीय दत्त्वा - ''स्वीकरोतु एतानि नाणकानि। भवतः सेवा-निमित्तं प्रतिवर्षम् एकं रजतनाणकं दत्तवान् अस्मि। एतानि स्वीकृत्य गच्छतु। परन्तु यदाकदाचिदपि प्रत्यागन्तुम् अर्हति एव भवान्'' इति उक्तवान्।

तावतः अल्पस्य धनस्य प्राप्त्या हिरालालः नितरां खिन्नः । पञ्चवर्षात्मकस्य कार्यस्य निमित्तं केवलानां पञ्चरजतनाणकानां प्राप्तिः अत्यल्पा एव । परन्तु एतद्विषये वादं कर्तुम् अनिच्छन् भूस्वामिने धन्यवादान् समर्प्य सः यदा ततः बहिः गन्तुम् उद्युक्तः तदा भूस्वामिनः पत्नी आगत्य पाथेयबन्धं तस्मै दत्त्वा उक्तवती – ''एतत् स्वीकरोतु । एकं दिनं यावत् एतत् भवतः बुभुक्षां निवारयिष्यति'' इति ।

हिरालालः पाथेयग्रन्थिं स्वीकृत्य कृतज्ञतापूर्वकं तस्याः मुखं पश्यन् तां नमस्कृत्य मौनेन ततः प्रस्थितवान् । भूस्वामिगृहवाससुखं परित्यज्यमानम् अस्ति इति किञ्चिदपि दुःखं न आसीत् तस्य ।

वाराणसीप्राप्तिनिमित्तं कति दिनानि आवश्यकानि इति हिरालालः न जानाति । तथापि सः निरन्तरं पदानि स्थापयन् एव अस्ति । वाराणसी प्राप्तव्या इति एकः एव सङ्कल्पः तस्य । तत्र मम भाग्यं फलितं भविष्यति इति विश्वसिति स्म सः ।

सन्ध्यासमये सः नितरां श्रान्तः आसीत् । अतः विश्रान्तेः निमित्तं स्थलम् अपेक्षमाणः सः इतस्ततः अपश्यत् । अनतिदूरे एव कश्चन वटवृक्षः दृष्टः तेन । सः तस्य समीपम् अगच्छत् । तस्य वृक्षस्य अधः दीर्घश्मश्रुकः जटाधारी कश्चन वृद्धः शयितः आसीत् । प्राचीनं वस्त्रं धृतवान् आसीत् सः ।

हिरालालस्य आगमनं दृष्ट्वा सः उत्थाय उपविष्टवान्, हिरालालेन सह सम्भाषणम् आरब्धवान् च । हिरालालः स्वस्य कथां सङ्क्षेपेण निवेद्य – 'कार्यप्राप्तये वाराणसीं गच्छन् अस्मि' इति तम् अवदत् । तदा सः वृद्धः मन्दहासपूर्वकम् अवदत् – ''वत्स ! सौभाग्यवशात् भवान् अत्र आगतः । अहं मम बुद्धिमत्तां विनिमातुम् इच्छामि'' इति ।

'विनिमय'शब्दश्रवणात् हिरालालः भूस्वामिनः पत्न्या दत्तं पाथेयबन्धं स्मृतवान् । सः तं बन्धम् उद्घाट्य तत्रत्यस्य अर्धभागं तस्मै वृद्धाय दत्तवान् । उभौ अपि सन्तोषेण भोजनं कृतवन्तौ ।

''भवान् दीर्घप्रयाणतः श्रान्तः अस्ति । अतः इदानीं भवान् विश्रान्तिं प्राप्नोतु । श्वः प्रातः अहं मम बुद्धिमत्तां दास्यामि'' इति उक्त्वा सः वृद्धः शयनं कृतवान् । हिरालालः अपि पादौ प्रसार्य शयानः निद्रां कृतवान् ।

अनन्तरदिने प्रातः वृद्धः स्वस्य जीवनस्य अनेकान् अनुभवान् हिरालालं श्रावितवान् । आत्मना प्राप्तानि सुखदुःखादीनि उपवर्ण्य – ''इदानीं मम अद्वितीया सम्पत्तिः एषा एव''



इति वदन् श्रीगन्धनिर्मितं वेणुं स्वस्य स्यूततः निष्कासितवान्, तं हिरालालाय दत्तवान् च ।

तं स्वीकृत्य हिरालालः अवदत् - ''आर्य ! अहम् एतस्य वादनक्रमं न जानामि खलु ! अतः किम् एतेन मम ?'' इति ।

तदा सः वृद्धः अवदत् - ''मया एतस्य वैशिष्ट्यं न उक्तम् एतावता अपि । एषः तु अपूर्वः वेणुः । भवान् एतस्य अन्तः मुखवायुं यदि प्रेरयति तर्हि सङ्गीतं स्वतः एव इतः निर्गमिष्यति । यः तत् सङ्गीतं शृणोति सः नृत्यम् आरभते । तादृशं सामर्थ्यम् अस्ति तस्य सङ्गीतस्य । यदा वायुप्रेरणं स्थगयते तदा एव नृत्यकर्ता नृत्यं स्थगयति । सङ्गीतश्रवणात् यः आनन्दः प्राप्यते तस्य प्रत्युपकाररूपेण श्रोता भवते किमपि दास्यति । एवं भवतः अपेक्षां साधयिष्यति एषः वेणुः'' इति ।



हिरालालः वृद्धं विनयेन नमस्कृत्य तस्य आशीर्वादम् अनुज्ञां च प्राप्य ततः प्रस्थितवान् । मध्येमार्गं तेन पक्षिणां गानं श्रुतम् । वेणुः वादनीयः इति इच्छा तस्मिन् उत्पन्ना । सः वेणुवादनम् आरब्धवान् । यदा कश्चन लुण्ठाकः वेणुसङ्गीतस्य अनुगुणं नृत्यन् तत्समीपम् आगतवान् तदा सः अवगतवान् यत् कश्चित् मम सङ्गीतं शृण्वन् अस्ति इति ।

हिरालालः वेणुवादनम् अनुवर्तितवान् । लुण्ठाकः निरन्तरं नृत्यम् अकरोत् । निरन्तर-नृत्यतः यदा लुण्ठाकस्य शरीरे श्रान्तिः दृष्टा तदा हिरालालः वेणुवादनं स्थगितवान् ।

सः लुण्ठाकः हिरालालसमीपम् आगत्य - ''मया जीवने इतः पूर्वम् एतादृशी शान्तता कदाचिदपि न अनुभूता । अहं नितरां कृतज्ञः अस्मि । एतानि रत्नाभरणादीनि भवान् एव स्वीकरोतु'' इति वदन् स्कन्धस्थं बन्धम् उद्घाटितवान् । तत्र प्रकाशमानानि विविधानि आभरणानि रत्नादीनि च आसन् ।

''अहम् अस्मि लुण्ठाकः । विविधेभ्यः गृहेभ्यः विलुण्ठ्य मया एतानि सम्पादितानि । अहम् एतां वृत्तिं परित्यक्तुम् इच्छामि । अतः किम् एतैः मम ? भवान् एव एतानि सर्वाणि स्वीकरोतु । भवतः जीवने एतानि अवश्यम् उपकाराय भविष्यन्ति'' इति उक्त्वा हिरा-लालस्य अङ्गीकारम् अनपेक्षमाणः आभरण-ग्रन्थिं हिरालालाय बलात् दत्त्वा वेगेन ततः निर्गतवान् ।

यावत् सः दृष्टिपथे आसीत् तावत् तमेव पश्यन् स्थितवान् हिरालालः । लुण्ठाकस्य

निर्गमनस्य अनन्तरं सः मन्दम् अग्रे पदानि अस्थापयत् ।

'लुण्ठाकसदृशाः वृकाः इव भवन्ति । तेषां स्वभावपरिवर्तनं क्षणिकम्' इत्येतं वास्तवांशं वराकः बालः हिरालालः न ज्ञातवान् एव । किञ्चिद्दूरं गतवतः लुण्ठाकस्य मनसि भावः आगतः – 'मूर्खेण मया बालाय सर्वस्वम् अर्पितम् । एतत् मया कथमपि प्रतिप्राप्तव्यम्' इति । 'बलात् स्वीकरणं लुण्ठनम् इव भासते । तस्मात् एतदर्थम् अन्यः एव उपायः चिन्तनीयः' इति अचिन्तयत् सः ।

वेगेन पदानि स्थापयन् सः समीपस्थं ग्रामं गत्वा, वणिजः वेषं धृत्वा ग्रामप्रमुखं दृष्ट्वा काञ्चित् कल्पितकथां श्रावयित्वा – ''सः वेणुवादकः बालः मम रत्नादिसम्पत्तिं वशीकृतवान् अस्ति । अतः अहं निस्वः जातः अस्मि'' इति अवदत् । कृत्रिमाणि अश्रूणि बालकस्य कपोलौ आर्द्रौ अकुर्वन् ।

''महोदय ! अलं चिन्तया । सः बालः एतं ग्रामं प्रविश्य एव अग्रे गच्छेत् । यदा सः अत्र आगमिष्यति तदा वयं तस्य बन्धनं करिष्यामः'' इति वणिग्वेषधारिणम् उक्त्वा तस्य बन्धनाय दृढकायान् कांश्चन भटान् नियोजितवान् ग्रामप्रमुखः ।

यदा हिरालालः तं ग्रामं प्रविष्टवान् तदा केचन तम् आवृत्य स्थितवन्तः । ते दण्डधारिणः आयुधधारिणः च आसन् । तान् दृष्ट्वा हिरालालः नितराम् आश्चर्यचकितः । 'इदानीं प्रतिभटनेन न किमपि प्रयोजनम्' इति अवगतवान् सः विना विरोधं स्वस्य बन्धनम् अङ्गीकृतवान् । भटाः तं बद्ध्वा ग्रामप्रमुखस्य समीपं नीतवन्तः ।

''मया कः अपराधः कृतः ?'' इति धैर्येण ग्रामप्रमुखम् अपृच्छत् हिरालालः ।

''अपराधं कृत्वा माम् एव पृच्छन् अस्ति खलु भवान् ! मम मित्रस्य सम्पत्तिः किं न अपहृता ? एवम् अपहृतानि तानि रत्नादीनि कुत्र गोपितानि ?'' इति दर्पेण अपृच्छत् ग्रामप्रमुखः ।

''तानि दद्याम् । किन्तु मम हस्तौ बद्धौ स्तः खलु !'' इति अवदत् हिरालालः ।

भटाः तस्य हस्तयोः बन्धनम् अपनीतवन्तः । तत्समनन्तरम् एव हिरालालः वेणुं गृहीत्वा वादनम् आरब्धवान् । तस्य मोहकरवस्य अनुगुणं सर्वे नृत्यम् आरब्ध-वन्तः । ग्रामप्रमुखः वणिग्वेषधारी चापि नर्तनम् आरब्धवन्तौ ।



''वेणुवादनं स्थगयतु इति तम् आदिशतु । अन्यथा सः निरन्तरं वेणुवादनं कुर्वन् एव भविष्यति'' इति अवदत् वणिग्वेषधारी ।

एतत् श्रुत्वा ग्रामप्रमुखः आश्चर्यचकितः । 'किम् एषः इतः पूर्वम् एव बालस्य वेणोः विषयं जानाति स्म ? अन्यथा बालस्य समीपे वेणुः अस्ति इति कथं वा ज्ञातं भवेत् एतेन ?' इति अचिन्तयत् ग्रामप्रमुखः । तावता अन्ये अपि बहवः ग्रामीणाः वेणुध्वनिना आकृष्टाः सन्तः तत्र उपस्थिताः । महान् जनसागरः एव तत्र सम्मिलितः । सर्वे अपि नृत्यन्ति स्म । हिरालालः निरन्तरं वेणुं वादयन् आसीत् ।

''अलं वेणुवादनेन । एतत् वेणुवादनं स्थगयताम् । अहं मम अपराधम् अङ्गीकरिष्यामि'' इति उच्चैः अवदत् वणिग्वेषधारी ।

हिरालालः वेणुवादनं स्थगितवान् । तदा वणिग्वेषधारी लुण्ठाकः अवदत् - ''वस्तुतः लुण्ठनं तेन न कृतम् । अहम् एव जनान् लुण्ठयित्वा रत्नाभरणादीनि सङ्गृहीतवान् आसम् । वेणुवादनं यत् स्थगितं तस्य प्रतिफलरूपेण मया एव तानि एतस्मै दत्तानि आसन् । तेन अहं दण्डितः एव । पुनः मम दण्डनं न करणीयं इति मम प्रार्थना'' इति ।

एतत् श्रुत्वा ग्रामप्रमुखः दीर्घं निश्श्वसितवान् । हिरालालः लुण्ठाकेन दत्तानि रत्नादीनि ग्रामप्रमुखस्य पुरतः संस्थाप्य अवदत् - ''एतेषां रत्नादीनां दानस्य अनन्तरम् एषः माम् उक्तवान् आसीत् यत् चौर्यवृत्तिं परित्यक्ष्यामि इति । एषः तत् वचनम् अवश्यं पालयेत् । नूतनं वञ्चनामार्गं न आश्रयेत् । तदर्थं सः इदानीम् एव पुनः शपथं करोतु'' इति ।

लुण्ठाकः एतदनुगुणम् एव शपथं कृतवान् । ततः ग्रामप्रमुखः अवदत् - ''इदानीं भवतः गमनाय अनुमतिः दीयते मया । पुनः कदापि भवान् एतादृशं कार्यं न कुर्यात्'' इति ।

तस्य निर्गमनस्य अनन्तरं ग्रामीणाः हिरालालम् उक्तवन्तः - ''भवता अस्मिन् एव ग्रामे वासः करणीयः'' इति ।

तदा ग्रामप्रमुखः हिरालालम् अवदत् - ''हिरालाल ! इदानीम् आवां भोजनार्थं गच्छाव । भवतः वासाय योग्यं स्थलं किं भवेत् इति अहं चिन्तयिष्यामि'' इति ।

एतत्सर्वं दृष्ट्वा हिरालालः - 'वाराणसीं प्रति गमनस्य श्रमः इदानीं करणीयः नास्ति' इति चिन्तयन् नितरां सन्तुष्टः ।



# वाचकानां कृते कथास्पर्धा

## चिता कथापूर्तिः अर्हति रू. २५०/- पारितोषिकत्वेन



**अधस्तनकथा पठ्यताम् -**

चन्दनसिंहः मोहनसिंहः च प्रतिवेशिनौ । चन्दनसिंहः नितरां निर्धनः । मोहनसिंहः च महाधनिकः । कदाचित् चन्दनसिंहः स्वक्षेत्रे प्रवृद्धम् एकं महाकारकं कलिङ्गफलम् अपश्यत् । सः तत् नीत्वा राज्ञे उपायनीकृतवान् । एतेन सन्तुष्टाः आस्थानिकाः अवदन् यत् एतस्मै यथायोग्यम् उपायनं दातव्यम् इति । राजा तस्मै शतं सुवर्णनाणकानि दत्तवान् ।

एतां वार्तां मोहनसिंहः दुराशाग्रस्तः जातः । 'महतः कलिङ्गफलस्य दानात् शतं सुवर्णनाणकानि यदि प्राप्येरन् तर्हि ततोऽपि महतः कलभस्य दानात् सहस्रं सुवर्णनाणकानि एव लभ्येरन्' इति विचिन्त्य सः अधिकमूल्येन एकं कलभं क्रीत्वा राज्ञे उपायनीकृतवान् । एतदवसरे सर्वे आस्थानिकाः मौनेन आसन् । राजा मन्त्रिणम् अपृच्छत् - ''एतस्मै किं दातव्यम् ?'' इति ।

इदानीं भवन्तः वदन्तु -

- मन्त्री कीदृशम् उत्तरं दत्तवान् स्यात् इति चिन्तयन्ति भवन्तः ?
- राजा कीदृशं व्यवहारं कृतवान् स्यात् ?

**स्वस्य अभिप्रायं १००-१५० शब्दैः लिखित्वा पिहितपत्रस्य उपरि 'Story contest' इति लिखित्वा अधस्तनेन प्रवेशपत्रेण सह प्रेष्यताम् -**

**अन्तिमः दिनाङ्कः - ३१, मार्च् - २००५**

नाम ---------------------------- वयः ---------- जन्मदिनाङ्कः ----------

विद्यालयः ---------------------------------------- कक्ष्या ----------

गृहसङ्केतः ----------------------------------------------------

----------------------------------------------------------------

------------------------------ Pincode ----------------

पोषकस्य हस्ताक्षरम्　　　　　　　　भागग्रहीतुः हस्ताक्षरम्

**CHANDAMAMA INDIA LIMITED**

82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097



# मूर्खः राजा

प्राचीने काले विरूपसेनः नाम राजा मगधदेशं पालयति स्म । तेषु दिनेषु बोधिसत्त्वः गजरूपेण तत्र जन्म प्राप्तवान् । सः गजः श्वेतः आसीत् । ऐरावतः इव च आसीत् । अतः मगधराजः तं स्वस्य पट्टगजं कृतवान् ।

किञ्चन पर्वदिनम् आगतम् । समग्रं राज्यम् इन्द्रनगरी इव अलङ्कृतम् । समग्रे राजधानीनगरे वैभवोपेता शोभायात्रा व्यवस्थापिता आसीत् । तदर्थं सः श्वेतः पट्टगजः विशेषतः अलङ्कृतः । शोभायात्रा आरब्धा । तस्य पार्श्वद्वये अपि पङ्क्तिबद्धतया स्थिता आसीत् सेना । राजा पट्टगजस्य उपरि उपविश्य गच्छन् आसीत् ।

राजपथे जनाः महता सन्तोषेण गजस्य स्तुतिं कृतवन्तः - ''अहो ! एतस्य गजराजस्य गाम्भीर्यम् ! चक्रवर्तिनः गजः इव शोभते एषः'' इति ।

गजस्य एतादृशीं स्तुतिं श्रुत्वा नितराम् असन्तुष्टः राजा अचिन्तयत् - 'जनाः राज्ञि मयि विशेषादरं दर्शयेयुः वस्तुतः । किन्तु ते एतस्मिन् वराके गजे महान्तम् आदरं दर्शयन्तः सन्ति । एतस्य गजस्य कारणतः कोऽपि जनः मां न पश्यति । सर्वेषां दृष्टिः गजे एव निहिता अस्ति । अतः एषः गजः मया कथमपि संहरणीयः एव' इति ।

अतः सः अनन्तरदिने हस्तिपकम् आहूय अपृच्छत् - ''भोः, अस्माकं पट्टगजः सम्यक् प्रशिक्षितः अस्ति एव खलु ?'' इति ।

''आं महाराज ! योग्यस्य प्रशिक्षणस्य अनन्तरम् एव एषः पट्टगजत्वेन चितः अस्ति । मया एव एतस्य गजस्य योग्यं प्रशिक्षणं दत्तम् अस्ति'' इति राजानं साभिमानम् अवदत् हस्तिपकः ।

''भवतः वचने विश्वासः नास्ति मम । एषः उद्धतः अस्ति इति मम अभिप्रायः'' इति अवदत् राजा ।

''महाराज ! एषः उद्धतः तु सर्वथा न''

इति अवदत् हस्तिपकः ।

''योग्यं प्रशिक्षणं प्राप्तम् अस्ति एतेन इति खलु अभिप्रैति भवान् ? एवं तर्हि किं भवान् एतं पुरतः दृश्यमानस्य पर्वतस्य शिखराग्रं प्रति नेतुं शक्नुयात् ?'' इति अपृच्छत् राजा ।

''कुतो न ? लीलया एतत् कार्यं करिष्यति अस्माकं गजः'' इति उक्त्वा हस्तिपकः अल्पे एव काले गजं राज्ञा सूचितस्य पर्वतस्य शिखरं प्रति नीतवान् ।

एतदनन्तरं राजा अपि सपरिवारं पर्वत-शिखरं प्राप्तवान् । पर्वताग्रे काचित् महाशिला आसीत् । तस्याः कश्चन भागः अग्रे प्रसृतः आसीत् ।

'गजं तं शिलाग्रं प्रति नयतु' इति सूचितवान् राजा ।

हस्तिपकः तथैव कृतवान् । राजा पुनः अवदत् - ''भवतः गजः कीदृशं प्रशिक्षणं प्राप्तवान् अस्ति इति ज्ञातुम् इच्छामि अहम् । किम् एषः गजः त्रिभिः एव पादैः स्थातुं शक्नुयात् ?'' इति ।

हस्तिपकः अङ्कुशेन आशयं ज्ञापयन् अवदत् - ''गजराज ! त्रिभिः पादैः स्थातव्यम् इति महाराजस्य आज्ञा अस्ति'' इति ।

गजः त्रिभिः पादैः अतिष्ठत् । एतत् दृष्ट्वा राजा अवदत् - ''साधु, साधु ! किम् एषः अग्रिमाभ्यां पादाभ्यां स्थातुं शक्नुयात् ?'' इति ।

गजः अग्रिमाभ्यां पादाभ्याम् अतिष्ठत् । ततः राजा अवदत् - ''किम् एषः पृष्ठ-भागीयाभ्यां पादाभ्यां स्थातुं शक्नुयात् ?'' इति ।



गजः पृष्ठभागीयाभ्यां पादाभ्याम् अपि अतिष्ठत् ।

''किम् एषः गजः एकेनैव पादेन स्थातुं शक्नुयात् ?'' इति अपृच्छत् राजा ।

गजः एकेन एव पादेन अपि अतिष्ठत् । एतादृशानि विविधानि कष्टानि अनुभूय अपि गजः पर्वतात् अधः न अपतत् खलु इति राजा नितरां खिन्नः ।

''अल्पं प्रशिक्षणं प्राप्तवान् यः कोऽपि गजः एतादृशानि कौशलानि प्रदर्शयितुम् अर्हति । अहम् अन्याम् अपि परीक्षां कर्तुम् इच्छामि'' इति अवदत् राजा ।

''महाराज ! एषः गजः तदर्थम् अपि सन्नद्धः एव अस्ति । का सा परीक्षा इति कृपया वदतु'' इति अवदत् हस्तिपकः ।

''यथा एषः पादैः पर्वतशिखरम् आरोहत्

तथैव किं वायौ अपि सञ्चारं कुर्यात् ? एतं वायौ सञ्चारयतु । "एषा मम आज्ञा'' इति अवदत् राजा ।

एतत् श्रुतवान् हस्तिपकः राज्ञः दुरुद्देशं ज्ञातवान् । सः गजस्य कर्णे अवदत् - ''गजराज ! कथमपि पर्वतशिखरात् भवान् पातनीयः इति राज्ञः योजना । भवतः योग्यतां सः सम्यक् न जानाति । यदि भवान् शक्तिमान् एव स्यात् तर्हि वायौ सञ्चारं कृत्वा स्वशक्तिं प्रमाणीकरोतु'' इति ।

अपूर्वमहिमशाली सः गजः गाम्भीर्येण पदानि स्थापयन् वायौ मन्दं डयमानः अग्रे अगच्छत् ।

तदा हस्तिपकः राजानम् अवदत् - ''महाराज ! एषः गजः साधारणः न, अपि तु दैवांशसम्भूतः । यः एतस्य महत्त्वं ज्ञातुं न अर्हति तादृशस्य पट्टगजः भवितुम् अपि न अर्हति एषः । योग्यं मूल्याङ्कनं कर्तुम् असमर्थः राजा अमूल्यं वस्तु प्राप्य अपि तस्य लाभं प्राप्तुं न अर्हति । मूर्खः एव स्वस्य मूर्खतां सर्वेषां पुरतः प्रकटयति'' इति ।

एतदनन्तरं गजः वायौ सञ्चरन् काशीराज्यं प्राप्नोत् । तत्र गत्वा राजोद्यानस्य उपरि आकाशे अतिष्ठत् च । एतत् दृष्ट्वा जनाः कोलाहलं कुर्वन्तः तत्र सम्मिलिताः ।

एषा वार्ता राज्ञा अपि श्रुता । राजा उद्यानं प्राप्य करौ योजयित्वा गजम् उद्दिश्य अवदत् - ''हे गजराज ! भवतः आगमनतः मम राज्यं पूतं जातम् । भूमिम् आगच्छतु कृपया इति भवन्तं विनयेन प्रार्थये'' इति ।

राज्ञः मुखात् एतत् श्रुत्वा गजरूपः बोधिसत्त्वः अधः आगतवान् । हस्तिपकः राजानं समग्रं वृत्तान्तं श्रावितवान् । गजराजस्य आगमनतः प्रजाः राजा च सन्तुष्टाः ।

ततः राजा तं गजं विशेषतः अलङ्कृत्य सुन्दरे भवने स्थापितवान् । स्वस्य राज्यं चतुर्धा विभज्य एकं भागं गजरूपेण स्थिताय बोधिसत्त्वाय सः उपायनरूपेण दत्तवान् । अपरं भागं हस्तिपकाय दत्त्वा शिष्टं भागं सः स्वयं पालितवान् ।

काशीराज्यं प्रति बोधिसत्त्वस्य गमनस्य अनन्तरं तस्य राज्यस्य सम्पत्तिः वैभवं च प्रवृद्धम् । तस्य यशः चतसृषु दिक्षु अपि प्रसृतं जातम् ।





# विष्णुपुराणम्

श्रीरामस्य पट्टाभिषेकः प्रवृत्तः । भरत-शत्रुघ्नयोः साहाय्येन सुचारुतया राज्य-शासनम् अकरोत् सः । तस्य शासनकाले जनाः सुखिनः धनसम्पन्नाः च आसन् ।

कदाचित् कश्चन ब्राह्मणः पञ्चवर्षीयस्य स्वस्य पुत्रस्य शवम् आत्मना सह आनीय रुदन् अवदत् - ''यदि राज्ञः शासनं सम्यक् स्यात् तर्हि देशे एतादृशम् अकालमरणं न सम्भवेत् । इक्ष्वाकुवंशीयानां शासने प्रजानां न किमपि कष्टम् आसीत् । किन्तु रामस्य शासनकाले एषः देशः अनाथः इव परिदृश्यते'' इति ।

तस्य एतानि वचनानि श्रुत्वा नितरां खिन्नः रामः मन्त्रिणः वसिष्ठादीन् च आनाय्य बाह्मण-बालकस्य अकालिकमरणवार्तां निवेदितवान् । तदा नारदः अवदत् - ''शम्बूकः नाम शूद्र-तपस्वी सशरीरं स्वर्गगमनाय तपः कुर्वन् अस्ति । एतत् युगधर्मविरुद्धम् । अतः एव तस्य बालकस्य अकालमरणं जातम्'' इति ।

एतत् श्रुत्वा रामः लक्ष्मणम् आज्ञापितवान् - ''भवान् तं ब्राह्मणं सान्त्वयित्वा तस्य पुत्रस्य शवं तैलभाण्डे स्थापयतु'' इति । ततः सः धनुर्बाणादिकं स्वीकृत्य पुष्पकविमानम् आरुह्य पूर्वस्यां, पश्चिमायाम्, उत्तरस्यां च दिशि अन्वेषणं कृत्वा अन्ते दक्षिणदिशं प्रति प्रस्थित-वान् । तत्र कस्मिंश्चित् सरोवरे स्थित्वा तपः कुर्वन् कश्चन तेन दृष्टः ।

रामः झटिति पुष्पकविमानात् अवतीर्य खड्गेन तस्य तपस्यतः जनस्य शिरसः छेदं कृतवान् । शम्बूकस्य शिरः प्रसन्नतापूर्वकं नेत्रे उन्मील्य रामं पश्यत् अवदत् - ''हे रघुराम ! जातस्य हि ध्रुवो मृत्युः इति वचनं लोके प्रसिद्धम् । वर्णाश्रमव्यवस्थापकः शासकः भवान् तु मम



अनन्तरक्षणे एव गृध्ररूपेण स्थितः ब्रह्मदत्तः नाम कश्चित् शापात् विमुक्तः जातः ।

कदाचित् विश्वामित्रः रामचन्द्रस्य सभाम् आगत्य आज्ञापितवान् यत् मम अपमाननं कृतवतः शकुन्तनामकस्य राज्ञः वधं करोतु इति । गुरोः आदेशस्य पालनाय रामः शकुन्तस्य वधाय प्रस्थितः । शकुन्तः हनूमतः मातरम् अञ्जनादेवीं शरणं गतवान् । मातुः आदेशस्य पालनाय हनुमान् रामबाणानां सम्मुखीकरणे उद्युक्तः जातः । रामनाम जपन् सः श्रीरामस्य पुरतः स्थितवान् ।

रामेण प्रयुक्ताः सर्वे बाणाः हनूमतः हृदये विलीनाः जाताः । एतत् दृष्टवान् विश्वामित्रः स्वस्य दुराग्रहं परित्यज्य शकुन्तं क्षान्तवान्, आशीर्वादेन अनुगृहीतवान् च ।

मरणस्य निमित्तमात्रम् । भवता स्वस्य धर्मः पालितः अस्ति । अतः अल्पः अपि खेदः न प्राप्तव्यः भवता । अहं कश्चन योगी अस्मि । विष्णुसान्निध्यं प्राप्तुम् इतः गच्छामि'' इति ।

शम्बूकस्य पत्नी कपिला रामसमीपम् आगत्य - ''सीतापते ! राजधर्मपालनावसरे भवता भाविनि काले अनेकानि कष्टानि सम्मुखीकरणीयानि भविष्यन्ति । एतत् तादृशेषु अन्यतमम् । अहं पत्या सह सन्तोषेण गच्छन्ती अस्मि । भवान् मनसा दृढः सन् कर्तव्यपालनं करोतु'' इति उक्त्वा स्वयमपि प्राणत्यागं कृतवती ।

ततः अयोध्यां प्रत्यागच्छन् रामः मध्येमार्गं कस्यचित् वृक्षस्य नीडे निवसतः उलूकस्य उपरि आक्रमणं कुर्वन्तं गृध्रं दृष्टवान्, दण्डरूपेण तस्य शिरसि प्रहृतवान् च ।

कदाचित् मध्यरात्रसमये कश्चन शुनकः रामस्य शयनप्रकोष्ठस्य पुरतः स्थित्वा आर्तनादम् अकरोत् । एतस्मात् रामः जागरितः जातः । शुनकस्य शरीरात् रक्तधारा निर्गच्छति स्म । रामः अङ्गुल्या व्रणस्थलं दृढतया गृह्णन् रक्तधारां स्थगितवान् । शुनकः स्वस्य पूर्वजन्मनः वृत्तान्तम् अश्रावयत् - ''पूर्वस्मिन् जन्मनि अहं कश्चन अर्चकः आसम्'' इति ।

कदाचित् पामरजनस्य कस्यचित् मुखात् निर्गतं वचनं रामेण श्रुतम् - ''अन्यस्मिन् गृहे वासं कृतवतीं पत्नीं गृहे स्थापयन् निर्लज्जव्यवहारं कर्तुं नाहं रामः'' इति ।

एतत् श्रुत्वा नितरां खिन्नः रामः लक्ष्मणम् आदिष्टवान् यत् सीतां वने परित्यज्य आगच्छतु इति । लक्ष्मणः रामस्य आदेशस्य विरोधं कृतवान् । तदा रामः तं बोधितवान् - ''हे

लक्ष्मण ! यत् सामान्यस्य जनस्य मुखात् निर्गतं तत्सम्बद्धः भावः प्रायः अनेकेषां जनानां मनसि गुप्तरूपेण स्थातुम् अपि अर्हति एव । राज्यं नाम न मृत्तिकामात्रम्, अपि तु मानवमयम् । विविधवर्णीयैः उपेतस्य राज्यस्य पालनम् असिधाराव्रतम् इव । अत्र स्वार्थस्य लेशः अपि नास्ति । प्रजानां मनोभावस्य अनुसरणं स्वस्य कर्तव्यं मत्वा राज्ञा पाषाणहृदयेन भवितव्यं भवति'' इति ।

सीतायाः मनसि बहोः कालात् इच्छा आसीत् यत् वने मुनीनाम् आवासे आनन्देन विहारः करणीयः इति । इदानीं सा गर्भवती अस्ति । तस्याः इच्छायाः पूरणाय रामस्य आदेशस्य अनुगुणं लक्ष्मणः ताम् अरण्ये परित्यज्य - ''रामरावणयोः युद्धावसरे यदा अहं मूर्च्छां गतः आसं तदा हनूमान् सञ्जीवनी-मूलम् आनीय अत्रैव माम् उज्जीवितवान् आसीत्'' इति वदन् विलपनं कृतवान् ।

एतदनन्तरं वाल्मीकिमहर्षिः सीताम् आश्रमं नीतवान् । तस्मिन् आश्रमे सीता उभौ पुत्रौ प्रसूतवती । तयोः नाम लवः कुशः चेति निश्चितम् ।

कदाचित् वृष्टेः अभावतः अयोध्यायां क्षामः सम्प्राप्तः । अतः प्राज्ञाः रामं बोधित-वन्तः यत् अश्वमेधयागः क्रियताम् इति । एतस्मै यागाय सीतायाः उपस्थितिः अपेक्षिता आसीत् । अतः रामः सीतायाः स्वर्णप्रतिमां निर्माप्य स्वस्य पार्श्वे स्थापयित्वा यागम् आरब्ध-वान् । अश्वमेधयागस्य अश्वं रघुवंशीयाः एव निग्रहीतुम् अर्हन्ति स्म, न अन्ये । यदा सः अश्वः वाल्मीक्याश्रमसमीपं गतः तदा लव-



कुशौ तं गृहीत्वा वृक्षे बद्धवन्तौ ।

यज्ञाश्वस्य मोचनाय भरतशत्रुघ्नलक्ष्मणादयः ससैन्यं तत्र आगताः । किन्तु लवकुशौ तान् सर्वान् मूर्च्छितान् कृतवन्तौ । अन्ते तयोः सम्मुखीकरणाय रामः एव उपस्थितः ।

लवकुशौ मातरं स्मरन्तौ रामं लक्ष्यीकृत्य बाणान् प्रयुक्तवन्तौ । तेषां बाणानाम् आघाततः रामः अपि मूर्च्छां गतः । तदवसरे सीता तत्र आगत्य रामस्य चरणौ स्पृष्टवती । तस्मात् रामः, अन्ये चापि सचेतनाः जाताः ।

एतदनन्तरं वाल्मीकिः सीतां लवकुशौ च रामाय अर्पितवान् ।

रामः सीताम् आत्मना सह सिंहासने उपवेशितवान्, लवकुशौ अङ्के उपवेश्य तयोः युवराजताम् उद्घोषितवान् च ।

ततः सः सीताम् उक्तवान् यत् स्वस्य

पावित्र्यस्य प्रमाणीकरणाय यथायोग्यं प्रतिज्ञा क्रियताम् इति ।

तदनन्तरं सीता अयोध्यानगरस्य मध्यभागे स्थित्वा आकाशं पश्यन्ती प्रार्थितवती यत् अयोध्यायां काले काले वृष्टिः भवतु इति । तत्समनन्तरम् एव आकाशः मेघैः व्याप्तः जातः । ततः सा पृथिवीं पश्यन्ती उक्तवती - ''मातः ! रघुवंशस्य दीपकौ पितुः आश्रयं प्राप्तवन्तौ । मम जीवने इतः परं कापि इच्छा नास्ति । अतः कृपया भवती मां स्वीकरोतु'' इति ।

अनन्तरक्षणे एव पृथिवी कम्पमाना जाता । भूमिः तत्र द्विधा विभक्ता । चतसृषु दिक्षु दिव्यः प्रकाशः प्रसृतः । रत्नखचिते सिंहासने उपविष्टा भूदेवी तत्र प्रत्यक्षा जाता, सीतां स्वस्य अङ्के स्वीकृत्य ततः अदृश्यतां गता । विभक्ता भूमिः पुनरपि यथापूर्वं संयुक्ता जाता । देवाः स्वर्गतः पुष्पवर्षणं कृतवन्तः ।

क्रुद्धः रामः सीतां नीतवतीं भूमिं भञ्जयितुं बाणादिकं गृहीतवान् । तदा अशरीरवाणी काचित् श्रुता - ''रामभद्र ! भूदेवीविषये क्रोधः मास्तु । सीता पृथिव्याः एव पुत्री । अतः सा स्वलोकं प्रतिगतवती अस्ति'' इति ।

रामः पुत्राभ्यां सह वसन् युगानि यावत् राज्यशासनं कृतवान् ।

अथ कदाचित् कालः ब्राह्मणवेषेण आगत्य रामम् अवदत् - ''अयि, महानुभाव ! भवन्तम् एकं देवरहस्यं वक्तुम् अहम् आगतः अस्मि । राजभवनस्य द्वारे लक्ष्मणः रक्षकरूपेण तिष्ठतु । यदि लक्ष्मणः कमपि अन्तः प्रेषयेत् तर्हि तेन मरणदण्डनम् अनुभोक्तव्यं भवेत्'' इति ।



रामस्य आदेशस्य अनुगुणं लक्ष्मणः द्वाररक्षणकार्ये प्रवृत्तः जातः । यमराजः स्वस्य वास्तविकरूपेण तिष्ठन् रामं स्मारितवान् - ''भवतः एतस्य अवतारस्य उद्देशः सफलः जातः अस्ति । अतः विष्णुरूपेण वैकुण्ठं प्रति भवान् आगच्छतु इति प्रार्थये'' इति ।

तस्मिन् एव समये दूर्वासाः तत्र उपस्थितः । सः लक्ष्मणम् अवदत् यत् मया एतस्मिन् एव क्षणे रामः द्रष्टव्यः एव इति ।

''यदि प्रवेशः न दीयेत तर्हि समग्रः रघुवंशः एव शापेन नाशयिष्यते मया'' इति लक्ष्मणम् असूचयत् सः । अतः लक्ष्मणः अन्तः प्रवेशाय तस्मै अनुज्ञां प्रदत्तवान्, स्वयं च सरयूनद्यां शरीरं विसृष्टवान् च ।

रामः लवकुशयोः पट्टाभिषेकं निर्वर्त्य राज्यभारं तयोः कृते समर्पितवान् ।

श्रावणमासः सः । सरयूनद्यां प्रवाहः वेगेन प्रवहति स्म । तस्मिन् दिने चन्द्रग्रहणम् अपि आसीत् । रामः सरयूनदीं प्रति प्रस्थितवान् । तस्य उभयोः पार्श्वयोः भरतः शत्रुघ्नः च आस्ताम् । मङ्गलः तूर्यनादः सर्वासु दिक्षु प्रतिध्वनितः भवति स्म । असंख्याः प्रजाजनाः रामस्य अनुसरणं कुर्वन्तः आसन् ।

रामः जले पादौ स्थापितवान् । तम् अनुसरन्तौ सहोदरौ अपि तथैव कृतवन्तौ । तस्मिन् एव समये चन्द्रग्रहणं समाप्तम् । पूर्णः चन्द्रः आकाशे विराजमानः जातः । आकाशतः देवाः पुष्पवर्षणं कृतवन्तः । साम-देवगान्धार-हिन्दोलादीनां रागाणां मधुरः ध्वनिः सर्वत्र श्रूयते स्म ।

सर्वत्र कौमुदीकान्तिः प्रसृता आसीत् ।



क्षीरसागरः इव सरयूनदी पुष्पैः पूर्णा सती उच्चलत्तरङ्गैः उपेता वेगेन प्रवहति स्म ।

इतः पूर्वम् एव लक्ष्मणः शेषशय्यारूपं, सीता लक्ष्मीरूपं च प्राप्य विष्णोः आगमनं प्रतीक्षमाणौ आस्ताम् । रामावतारं समाप्य विष्णुः स्वस्य वास्तविकरूपं प्राप्तवान् । भरत-शत्रुघ्नौ शङ्खचक्ररूपं प्राप्य तस्य हस्ते विराजमानौ जातौ ।

मानवजन्म प्राप्तवान् पुरुषोत्तमः रामः पितृवचनपरिपालनाय वनवासं कृतवान् । कार्यसाधनाय सामान्यः मानवः इव व्यवहरन् सः वानराणां साहाय्येन सेतोः निर्माणं कृतवान् । आत्मानम् अजेयं भावयन्तं रावणं संहृत्य राक्षसकुलस्य अन्तं कल्पितवान् । लङ्कातः सीतां प्रत्यानीय एकपत्नीव्रतस्थः सन् उत्तमं राज्यशासनं कृतवान् । एतादृशानां घटनानां

कारणतः विष्णोः दशसु अवतारेषु रामवतारः एव उत्कृष्टः महत्त्वोपेतः च इति परिभाव्यते । उत्तमं राज्यशासनं रामराज्यत्वेन ख्यातं जातम् ।

भगवान् महर्षिः सूतः रामावतारकथायाः श्रावणं समाप्य कृष्णावतारस्य कथायाः श्रावणम् आरब्धवान् –

स्वस्य परमभक्तान् दानवान् विष्णुना संह्रियमाणान् दृष्ट्वा कदाचित् भगवान् शिवः स्वस्य भ्रुकुटिं वक्रीकृतवान् । तस्य भ्रुकुटितः सहस्त्रकवचः नाम कश्चन घोरः राक्षसः उत्पन्नः । तस्य शरीरं शतेन कवचैः आवृतम् आसीत् । स्वस्य कुण्डलस्य कारणतः सः अजेयः जातः आसीत् ।

अतः सः कदाचित् महान्तं गर्वं प्राप्य भीषणं गर्जनं कुर्वन् अवदत् - ''अहं सामान्यः राक्षसः न, अपि तु रुद्रांशेन सम्भूतः अस्मि । यदि विष्णोः धैर्यं स्यात् तर्हि सः मम पुरतः आगच्छतु नाम'' इति ।

एतत् श्रुतवान् विष्णुः नरनारायणनामकयोः ऋष्योः रूपेण जन्म प्राप्तवान् । नरनारायणौ सहस्त्रकवचं संहर्तुम् इच्छन्तौ तपस्यायाम् उद्युक्तौ जातौ ।

इन्द्रः तयोः तपस्यायाः भङ्गाय अप्सरसः प्रेषितवान् । तदा नारायणः स्वस्य ऊरुतः ऊर्वशीम् उत्पादितवान् । ऊर्वश्याः सौन्दर्यस्य पुरतः रम्भादीनाम् अप्सरसां कान्तिः हतप्रभा जाता । इन्द्रः नरनारायणौ क्षमां सम्प्रार्थ्य भक्त्या नमस्कृतवान् । नारायणः इन्द्रम् अवदत् यत् भवान् ऊर्वशीम् आत्मना सह देवलोकं नयतु इति । एवम् ऊर्वशी अप्सरोभिः सह देवलोकं गतवती ।

नरनारायणयोः तपस्या अनुवृत्ता । एकः यदा तपः करोति स्म तदा अपरः धनुर्बाणादिकं गृहीत्वा सहस्त्रकवचेन सह युद्धं करोति स्म । एवं सहस्त्रं वर्षाणि यावत् युद्धं प्रवृत्तम् । एतस्मिन् युद्धे नरनारायणौ सहस्त्रकवचस्य नवनवत्युत्तरनवशतं कवचानि भञ्जितवन्तौ ।

अन्ते एकमात्रकवचः सः राक्षसः पलाय्य सूर्यं शरणं गतः ।

तदा विष्णुः अवदत् – ''पूर्वं यः गर्वेण व्यवहृतवान् सः इदानीं भीरुः इव पलायनं कृतवान् अस्ति । प्राणरक्षणाय सूर्यं शरणं गतः अस्ति । कृष्णावतारसमये अहम् एतस्य अहङ्कारं भञ्जयिष्यामि'' इति ।



# किञ्चिज्ज्ञः वैद्यः अपूर्णश्रवणं च

हेलापुरीनिवासी गोपालः धेनुद्वयं महिषीद्वयं च पालयन् क्षीरवाणिज्यं करोति स्म । कदाचित् तस्य एका धेनुः अस्वस्था जाता । अतः गोपालः सुगन्धपुरस्य क्षीरवणिजा गङ्गेन मिलित्वा स्वस्य धेन्वाः अस्वास्थ्यविषयम् उक्तवान् ।

तदा गङ्गः अपृच्छत् - ''कथनात् अवगम्यते यत् भवतः अस्वस्था धेनुः तृणं न खादति, जलं न पिबति, कमपि आहारं न जिघ्रति अपि इति । एवं ननु ?'' इति ।

''आम्, आम् ! तथैव अस्ति स्थितिः'' इति अवदत् गोपालः ।

तदा गङ्गः अवदत् - ''गते मासे मम श्वेता धेनुः एवमेव अस्वस्था आसीत् । तदा मया काचित् चिकित्सा कृता । द्रोणीमिते जले चषकमितं निम्बरसं, द्विचषकमितं कारवेल्लरसं च योजयित्वा अहं धेनुं पायितवान् । दिनद्वये एव ...''

गङ्गस्य कथनस्य समाप्तितः पूर्वम् एव गोपालः - ''भवतः चिकित्सा कीदृशी इति ज्ञातं मया । एषोऽहम् आगच्छामि'' इति वदन् ततः वेगेन निर्गतवान् ।

दिनद्वयस्य अनन्तरं गोपालः गङ्गेन मिलितः । तदा सः विषादेन अवदत् - ''गङ्ग ! भवता यथा उक्तं तथैव चिकित्सा कृता मया । तथापि अद्य मम धेनुः दिवं गता'' इति ।

''मया यः चिकित्साक्रमः उक्तः तस्य अनुसरणात् मम श्वेता धेनुः अपि मृता एव । अतः अहं वक्तुम् इच्छामि स्म यत् मया यत् कृतं तथा किञ्चिज्ज्ञस्य वचनम् अपालयन् योग्यस्य वैद्यस्य मार्गदर्शनं प्राप्नोतु इति । किन्तु मम कथनं पूर्णतः अश्रुत्वा एव भवता निर्गतम्'' इति अवदत् गङ्गः ।





# अपूर्वः उपायः

पुरा महापुरनामके ग्रामे बहवः आढ्याः आसन् । तस्मिन् एव ग्रामे रामगुप्तनामकः कश्चन आपणिकः अपि आसीत् । तस्य द्वौ पुत्रौ । पिता पुत्रौ च विविधवाणिज्येन जीवनं निर्वहन्ति स्म ।

रामगुप्तः अपि पूर्वं धनिकः आसीत् । वाणिज्ये जातया हान्या सः दारिद्र्यावस्थाम् आपन्नः । इदानीं तस्य गृहमात्रम् अवशिष्टम् आसीत्, न तु अन्यत् किमपि । तथापि सः निराशः न अभवत् । भविष्यति काले भाग्यं पुनः आगच्छेत् इति आशया सः पुनः वाणिज्यम् आरब्धवान् । पूर्वतनं धनिकजीवनं पुनः प्राप्स्यामि एव इति तस्य मनः पुनः पुनः चिन्तयत् एव आसीत् ।

महापुरग्रामं प्रति लुण्ठाकानाम् आक्रमणम् असकृत् भवति स्म । लुण्ठाकानाम् आगमनं यदा भवति तदा ग्रामीणाः स्वसम्पत्तिं कुत्रापि गोपयन्ति स्म, सम्पत्त्या सह ग्रामान्तरं गच्छन्ति स्म वा ।

कदाचित् लुण्ठाकाः आगच्छन्तः सन्ति इति वार्ता ग्रामीणैः प्राप्ता । तदा ग्रामीणाः गृहाणि त्यक्त्वा गतवन्तः । किन्तु रामगुप्तः स्वपुत्रौ उक्तवान् – ''पुत्रौ ! अहं भवद्भ्यां सह न आगमिष्यामि । दिनद्वयम् अत्रैव कुत्रापि रहसि स्थास्यामि । गृहस्य पृष्ठभागे स्थिते तृणराशौ खाद्यवस्तूनि स्थापयित्वा भवन्तौ गच्छताम्'' इति ।

पितुः वचनस्य अनुगुणमेव तस्य पुत्रौ खाद्यं संस्थाप्य ततः पलायितवन्तौ ।

लुण्ठाकाः ग्रामम् आगताः एव । ते प्रतिगृहं शोधनं कृतवन्तः । लुण्ठाकानां नेता अश्वस्य उपरि एव उपविष्टवान् । अनुचराः गृहे चोरितानि वस्तूनि, धनस्यूतान् च आनीय अश्वस्य उपरि स्थापितवन्तः । तावता लुण्ठाकनायकस्य दृष्टिः रामगुप्तस्य गृहे पतिता । सः तत् गृहं प्रविष्टः । गृहे स्थितस्य

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'

रामगुप्तस्य हृदये कम्पनम् आरब्धम् । रहसि एव सः तृणराशिं प्रविश्य लुण्ठाकनायकस्य व्यवहारं पश्यन् स्थितः ।

सः लुण्ठाकनायकः स्वस्य अश्वम् काष्ठ-भागे एकत्र बद्ध्वा गृहस्य अन्तः प्रविष्टः । बुभुक्षितः अश्वः तत्रैव स्थितानि तृणानि खादितुम् उद्युक्तः जातः ।

समयं निरीक्षमाणः रामगुप्तः अश्वस्य उपरि स्थितान् धनस्यूतान् आनीय तृणराशौ गोप्य-रूपेण स्थापितवान् । उपरि स्थितः भारः न्यूनः जातः इति कारणात् अश्वः अन्यत्र गत्वा तृणानि खादितुम् उद्युक्तः ।

गृहस्य अन्तः प्रविष्टः लुण्ठाकनायकः गृहं समग्रम् अवलोकितवान् । किमपि न लब्धं तेन । बहिः आगतः सः अन्यत्र तृणानि चरन्तं अश्वम् अपश्यत् । अश्वस्य उपरि स्थिताः धनस्यूताः तेन न दृष्टाः ।

लुण्ठाकनायकः भीतः सन् धनस्यूताः कुत्रापि पतिताः स्युः इति चिन्तयन् सर्वत्र तेषाम् अन्वेषणं कृतवान् । तदा तस्य अनुचराः तत्र आगताः । सः कातरतया तान् उक्तवान् - ''अश्वस्य उपरि स्थितान् स्यूतान् भवन्तः स्वीकृतवन्तः किम् ?'' इति ।

चोराः परस्परं मुखं दृष्टवन्तः । तेषां मनसि कश्चन सन्देहः जातः - 'एषः एव तान् स्यूतान् कुत्रापि रहसि निक्षिप्य एवम् अभिनयति' इति । अतः सर्वेऽपि नायकं पृष्टवन्तः - ''अस्मिन् ग्रामे अस्मान् विहाय अन्यः कोऽपि नास्ति । स्यूताः बहुभारभूताः आसन् एव । ते कथम् अदृश्याः भवितुम् अर्हन्ति ?'' इति ।

ततः सर्वेऽपि स्यूतानाम् अन्वेषणं कर्तुम् उद्युक्ताः । किन्तु किमपि प्रयोजनं न अभवत् । अन्ते लुण्ठाकनायकः - 'धनस्यूतान्वेषणं मम दायित्वम्' इति प्रतिज्ञातवान् ।



अनन्तरदिने लुण्ठाकाः ग्रामं त्यक्त्वा गताः । तेषां गमनवार्तां ज्ञातवन्तः सर्वे स्वग्रामम् आगताः । रामगुप्तः स्वेन प्राप्तान् धनस्यूतान् बहुजागरूकतया गोप्यतया च गृहे स्थापितवान् । पुत्रौ अपि तं विषयं न उक्तवान् सः ।

रामगुप्तस्य चिन्तनानुगुणमेव सः लुण्ठाकनायकः स्वयम् अश्ववणिग्रूपेण तं ग्रामम् आगत्य तत्र स्थितानां सर्वेषां धनिकानां विषये विचारणाम् आरब्धवान् ।

तस्य नायकस्य चिन्तनम् आसीत् यत् एषु दिनेषु आकस्मिकरूपेण कोऽपि धनवान् सञ्जातः इति वार्ता यदि लभ्येत तर्हि स एव मम धनापहारकः इति । तं दृष्ट्वा रामगुप्तः ज्ञातवान् एष एव लुण्ठाकनायकः इति ।

रामगुप्तः एवमपि चिन्तितवान् यत् अद्य रात्रौ सः मम गृहम् आगच्छेत् इति । अतः सः गृहस्य पृष्ठभागस्य परीक्षां बहुधा कृतवान् । रामगुप्तस्य निरीक्षा मिथ्या न जाता । रात्रौ सः लुण्ठाकनायकः गुप्तरूपेण तस्य गृहम् आगत्य कुत्रचित् लीनः अभवत् । सः चिन्तितवान् आसीत् यत् गृहे धनविषये किमपि सम्भाषणं भवेत् इति ।

एतत्सर्वं ज्ञातवता रामगुप्तेन द्वौ पुत्रौ अपि आहूय उच्चैः उक्तम् - ''पुत्रौ ! परह्यः अहं तृणराशितः तृणानि कर्षन् आसम् । तदा तत्र मया धनस्यूताः लब्धाः'' इति ।

पुत्रौ आश्चर्येण पृष्टवन्तौ - ''एवम् ! एतावत्पर्यन्तं भवता न उक्तमेव'' इति ।

''वत्सौ ! ते स्यूताः केषां स्युः, कथम् आगताः इत्यादीन् विषयान् अविज्ञाय किमपि कथनं न उचितमिति मत्वा मया न उक्तम् आसीत्'' इति उक्तवान् रामगुप्तः ।

''ते स्यूताः कुत्र स्थापिताः ?'' इति पृष्टवन्तौ पुत्रौ ।

''कूपे क्षिप्तमस्ति'' इति उक्तं रामगुप्तेन ।

लुण्ठाकनायकः एतत् वचनं श्रुत्वा नितरां सन्तुष्टः । सर्वेषां शयनस्य अनन्तरं सः रज्जुसाहाय्येन कूपम् अवतीर्णः ।

झटिति रामगुप्तः पुत्रौ सत्यांशं कथितवान् । ततः ते त्रयः अपि कूपसमीपं गत्वा रज्जुं कर्तितवन्तः, महाशिलां चोरस्य उपरि पातयित्वा तं मारितवन्तः च ।

ततः रामगुप्तः धनिकः सन् पुत्राभ्यां सह सुखेन जीवितवान् ।



शान्तिपुरसिंहासनं बलात् वशीकृतवान् वीरसिंहः मृगया-व्याजेन विद्रोहिणाम् अन्वेषणाय अरण्यं गच्छति । तदा वन्यपशवः तं तदनुयायिनः च आक्रमणेन अभिघ्नन्ति । कस्यचन सुन्दरस्य युवकस्य आदेशेन ते पशवः प्रतिगच्छन्ति । प्रतिगमनसमये वीरसिंहः चिन्तयति - एषः तरुणः कः स्यात् इति । अत्रान्तरे जयनगरे खननात् काचित् स्वर्णप्रतिमा प्राप्यते । प्रतिमायाः प्रतिष्ठापनाय मन्दिरं निर्मातव्यम् इति दलपतिः सुखदेवः आज्ञापयति ।



# आर्यः

## अज्ञातराजकुमारस्य रहस्यम्

चित्रम् - गान्धि-अय्यः

दलपतिः सुखदेवः उद्याने सञ्चरन् यदा आसीत् तदा कश्चन आप्तः अङ्गरक्षकः तत्समीपम् आगच्छति ।
















यदि प्रतिमायाः अर्पणं न अङ्गीक्रियेत तर्हि मया अनन्यगतिकतया राजादेशः श्रावणीयः भवति यत् ...


बलात्कारेण वा सा प्रतिमा नेष्यते एव इति ।
कनकदुर्गाप्रतिमा सा । तस्याः प्रतिष्ठापनाय वयम् एकस्य मन्दिरस्य निर्माणाय उद्यताः स्मः ।


भवान् प्रतिगत्य वीरसिंहं वदतु यत् जयनगरं प्रतिमादानं निराकरोति इति ।
एषः एव भवतः अन्तिमः निर्णयः चेत् तं तथैव वदिष्यामि ।


एतत् जयनगरस्य हिताय न । सर्वासां सम्भाव्य-स्थितीनां निमित्तम् अस्माभिः सज्जैः भवितव्यम् ....


शान्तिपुरे ....
सुखदेवः अस्माकम् आज्ञां कथं तिरस्कर्तुम् अर्हति ?


जब्बर ! अस्माभिः जयपुरम् आक्रान्तव्यम् अस्ति ।
महाराज ! जयनगरतः प्रतिमा बहिः यथा न गच्छेत् तथा करणीयम् अस्माभिः ।


सैनिकाः सुखदेवस्य भवनं पार्श्वद्वयतः आक्रामन्ति । तृतीयेन गणेन भवनं प्रवेष्टव्यम् इति निश्चितम् । जब्बरसिंहः त्रिभिः अपि दलपतिभिः सह समालोचनं करोति ।
प्रतिमां स्वाधीनीकृत्य नौकया शान्तिपुरं प्रति नयाम वयम् ।
एतत् एव समुचितम् । आक्रमणविषये अधिकचिन्ता करणीया नास्ति अस्माभिः ।
महाराज ! कदा तत् भवनम् आक्रंस्यामः ?
जयनगरं प्रति अचिरात् एव गमनं वरम् ।


शान्तिपुरस्य सैनिकाः दलपतेः सुखदेवस्य भवनम् आक्रामन्ति ।


किं वयं भवनं वशीकरवाम सेनापतिवर्य !
अग्रे गच्छन्तु । भवनस्य पुरतः पङ्क्तिरूपेण तिष्ठन्तु च । यदि कोऽपि विरोधं करिष्यति तर्हि आक्रमणं क्रियताम् ।


जब्बरसिंहः केनचित् दलपतिना सह भवनस्य दिशि गच्छति ।


सुखदेवपक्षीयः कश्चन रक्षकभटः दुर्गस्य दिशि आगच्छतः शत्रून् पश्यति ।
अग्रे सरन्तु ।


महाराज ! अस्माकं रक्षकभटेन केनचित् शत्रूणाम् आगमनं दृष्टम् अस्ति ।
ते आक्रमणं कुर्वन्तु नाम । वयं विरोधं न करिष्यामः ।


अपरः रक्षकभटः अन्तः आगच्छति ।
सेनापतिः इव दृश्यमानः कश्चन जनः भवनस्य दिशि आगच्छन् दृष्टः ।
सः जब्बरसिंहः एव स्यात् । सः आगच्छतु नाम ।


अहं शान्तिपुरस्य सेनापतिः जब्बरसिंहः अस्मि । अहं स्वर्ण-प्रतिमां नेतुम् आगतः अस्मि ।
मया सन्देश-वाचकः उक्तः आसीत् यत् प्रतिमा न दास्यते इति ।


वयं स्वर्णप्रतिमायाः निमित्तं मन्दिरं रचयन्तः स्मः । अचिरात् एव तस्याः पूजायाः आरम्भः भविष्यति अपि ।
सा प्रतिमा भूमितः प्राप्ता इत्यतः तस्याः विषये अधिकारः राज्ञः एव भविष्यति, न तु जयनगरस्य ।


वयं प्रतिमाम् अपवित्रां कर्तुं न इच्छामः । सा तु मन्दिरे तिष्ठेत् । तस्याः पूजायां जनानाम् एव अधिकारः ।
प्रतिमा कुत्र अस्ति इति एतावत् एव वदतु ।

जब्बरसिंहः अधिकारदर्पं प्रदर्शयितुम् इच्छति ।

अहम् आज्ञापयामि सा बहिः आनीयताम् । एषा राज्ञः आज्ञा । अन्यथा वयं बलात् तां वशीकरिष्यामः ।

कनकदुर्गादेव्याः निमित्तम् अहं रक्तपातं न इच्छामि । यथा रोचते तथा कर्तुम् अर्हति भवान् ।

जब्बरसिंहः दलपतिं सङ्केतेन सूचयति ।

अत्र आगच्छतु । आत्मना सह कमपि सैनिकम् आनयतु च ।

दलपतिः केनचित् सैनिकेन सह तस्याः प्रतिमायाः अन्वेषणाय भवनस्य अन्तर्भागं गच्छति ।

अचिरात् एव अस्माभिः प्रतिमा प्राप्येत इति भाति ।

प्रतिमातः निर्गच्छन् प्रकाशः प्रतिमास्थलं ज्ञापयति । दलपतिः सैनिकः च प्रकोष्ठं प्रविशतः । प्रकाशस्य तीव्रताकारणतः तौ द्रष्टुम् असमर्थौ भवतः ।

अहो ! उग्रः प्रकाशः एषः ।

एतां वयं कथं नेतुं शक्नुयाम ?

अनुवर्तते

## मानवनिर्मितं महाद्भुतम्

# साञ्चीस्तूपः



भोपाल-झाङ्झी-रेल्मार्गे भोपालतः ३० कि.मी.दूरे तिष्ठति साञ्ची । एषा बौद्धावशेषाणां निमित्तं ख्याता अस्ति । अत्र यावता प्रमाणेन बौद्धावशेषाः प्राप्यन्ते तावता प्रमाणेन देशे अन्यत्र न प्राप्यन्ते । अत्रत्याः स्तूपाः तावत् सुप्रसिद्धाः । एवं हि श्रूयते यत् प्राचीनाः ये स्तूपाः अत्र सन्ति तादृशाः देशे अन्यत्र न सन्ति इति । बुद्धस्य प्रमुखस्य शिष्यस्य सारीपुत्रस्य दोगल्लानस्य च अस्थीनि अत्रत्ये कस्मिंश्चित् स्तूपे सुरक्षिततया स्थापितानि सन्ति । ब्रिटिष्शासकाः दीर्घकालं यावत् स्वसङ्ग्रहालये एतानि स्थापितवन्तः आसन् । १९४९ तमे वर्षे तैः तानि भारताय समर्पितानि ।

साञ्च्याः महास्तूपः तावत् जगत्प्रसिद्धः । एतस्य व्यासः १२० पादमितः, औन्नत्यं च ५४ पादमितम् । एतस्य निर्माणं न सिकताशिलादिभिः, अपि तु सुधाचूर्णेन कृतम् अस्ति । एतं परितः प्राकारः अपि अस्ति । एतस्मिन् प्राकारे चत्वारि द्वाराणि सन्ति । एकैकम् अपि द्वारं २८२ पादौन्नत्यमितम् अस्ति । द्वारेषु बौद्धजातककथाः विस्तृततया चित्रिताः सन्ति । दक्षिणद्वारसमीपे अशोकधर्मशासनसम्बद्धः कश्चन शिलाखण्डः अस्ति ।

१२५० तमे क्रिस्ताब्दे सम्राट् अशोकः एतस्य स्तूपस्य निर्माणं कृतवान् । एतस्य उपरि ये चित्रविन्यासाः सन्ति ते विदेशीयैः बहुधा प्रशंसिताः सन्ति ।

FOR SUBSCRIPTION DETAILS PLEASE SEE PAGE 4

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवदर्थं विज्ञानम्

### सद्यश्चित्रदायकं चित्रग्राहकम्

एड्विन् लेण्डः सकुटुम्बं विहारयात्रार्थं गतः आसीत् । तदवसरे सः प्रियपुत्र्याः जेन्नीफरायाः एकं भावचित्रं स्वीकृतवान् । लघ्वी बालिका जेन्नीफरा स्वस्य भावचित्रं तस्मिन् एव क्षणे द्रष्टुम् ऐच्छत् । तदा लेण्डस्य मनसि विचारः आगतः – एतादृशं चित्रग्राहकं मया कुतो वा न निर्मातव्यम् ? इति । तस्मात् सद्यश्चित्रदायकस्य चित्रग्राहकस्य निर्माणं जातम् ।

एतादृशस्य चित्रग्राहकस्य निर्माणं तु असाध्यम् एव इति पूर्वम् एषः एव प्रतिपादितवान् आसीत् । यतः चित्रग्राहकस्य अन्तः यत् 'फिल्म्' भवति तत् बाह्यवातावरणम् अवलम्ब्य चित्राणि ददाति । प्रकोष्ठवातावरणं यदि सामान्योष्णोपेतं तर्हि केषुचित् क्षणेषु सामान्यकाण्ट्रास्ट्युक्तं चित्रं प्राप्यते । अधिक'काण्ट्रास्ट्'युक्तं चित्रम् आवश्यकं चेत् कांश्चन निमेषान् प्रतीक्षणीयं भवति । एतम् अंशं मनसि निधाय विशेषावधानं दत्त्वा लेण्डेन उपयोक्त्रनुकूलं चित्रग्राहकं निर्मितम् ।




## भवतां परिसरः

### जेट्विमानस्य पृष्ठतः मेघः



जेट्विमानं यदा गच्छति तदा तस्य पृष्ठभागे श्वेता धूमपङ्क्तिः दृश्यते इव । केषाञ्चित् क्षणानाम् अनन्तरं सा अदृश्यतां गच्छति । वस्तुतः एषा पङ्क्तिः भवति मेघमयी ।

एषा मेघपङ्क्तिः कथं निर्मिता भवति ? एतस्य अवगमनार्थं कार्यानादीनां सञ्चारः अवलोकनीयः । तेषां गमनसमये पृष्ठतः धूमरेखा दृश्यते खलु, या च महान्तं जलांशं वहति । जेट्विमानं तु अत्युन्नते आकाशे सञ्चरति । तत्र उष्णतांशः ३० डिग्रीपरिमितः भवति । अतः जलांशः हिमकणरूपतां प्राप्नोति । अतः एव हिमकणसमूहरूपा मेघपङ्क्तिः दृश्यते । किन्तु एषा भवति क्षणस्थायिनी । हिमकणपङ्क्तिः विशाले प्रदेशे प्रसृता दृश्यते इत्यतः मार्गाकारः दृष्टिगोचरतां याति ।

# पृच्छ्यतां भवताम् पृच्छ्यतां भवताम्

## भवन्तः जानन्ति किम् ?

### प्रैरीशुनकाः

'प्रैरीशुनक'नामकाः जीविनः वस्तुतः न शुनककुलीयाः । किम् एतत् भवत्सु आश्चर्यं जनयति ? आश्चर्यकरम् अपि एतत् न असत्यम् ।

एते वस्तुतः दंशजातीयाः । ३० से. मी. दैर्घ्यं भवति प्रायः एतेषाम् । चिक्रोड-सजातीयाः एते इति वक्तुं शक्यं प्रायः । तथापि एते यं ध्वनिम् उत्पादयन्ति सः



शुनकानाम् इव भवति इत्यतः नाम्ना शुनकत्वं प्राप्तम् अस्ति एतैः ।

एते जीविनः दिवाकाले खादन्तः अन्यैः सजातीयैः सह विहरन्तः च दृश्यन्ते स्वस्य वसतिप्रदेशेषु । रात्रौ च सुरक्षायुक्ते बिले सुखेन निद्रान्ति ।

प्रैरीशुनकाः ग्रामनगरादिषु विशाल-वसतिप्रदेशेषु एव निवसन्ति । तत्र एतेषां वासः भवति सामूहिकतया । एकस्मिन् समूहे सप्तत्यधिकाः प्रैरीशुनकाः भवन्ति । एकः प्रैरीशुनकः यदा अपरेण मिलति तदा दन्त-प्रदर्शनद्वारा परस्पराभिनन्दनं भवति । ततः तौ मैत्रीसूचकतया पुच्छं चालयतः ।

## अभिवर्ध्यतां ज्ञानशक्तिः

अत्र केचन सामान्यज्ञानसम्बद्धाः प्रश्नाः सन्ति भवतां कृते

१) गान्धिसागरबन्धः कुत्र अस्ति ?
अ) कोटायाम्
आ) राञ्च्याम्
इ) भाक्रायाम्
ई) गङ्गानगरे





२. का नदी तार्मरुभूमौ प्रवहति ?
अ) नर्मदा आ) तपती
इ) गोदावरी ई) सिन्धुः

३. सिक्किमराज्यं कदा २२ तम-राज्यत्वेन मान्यतां प्राप्नोत् ?
अ) १९५५ तमे वर्षे
आ) १९७५ तमे वर्षे
इ) १९६५ तमे वर्षे
ई) १९८५ तमे वर्षे





४. देहली कदा केन्द्रशासित-प्रदेशत्वेन घोषिता जाता ?
अ) १९५६ तमे वर्षे
आ) १९४६ तमे वर्षे
इ) १९६६ तमे वर्षे
ई) १९७६ तमे वर्षे

(उत्तराणि ६४ तमे पृष्ठे)

# चित्रशीर्षिकास्पर्धा

**अधस्तनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**



ANANTHA PRABHAKAR DUTT



KALANIKETAN BALU

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया –
**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**
योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

पुरस्कृता शीर्षिका



**'जनवरी'मासस्य चित्रशीर्षिकाप्रेषकः –**
**सि.एस्.रमेशः**
पि. ३०२, एट्रियम्, कलाक्षेत्रमार्गः
**चेन्नै - ६०० ०४१**
तमिळुनाडु

**भविष्यसूचनाय डमरुवादनम्**
**भाविसौख्याय देवपूजनम्**

## अभिवर्ध्यतां ज्ञानशक्तिः – उत्तराणि

१. कोटायाम्
२. सिन्धुः
३. १९७५ तमे वर्षे
४. १९५६ तमे वर्षे

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

A VALUE ADDITION TO YOUR PERSONAL LIBRARY FROM CHANDAMAMA

Carefully chosen

LEGENDS AND PARABLES

including

TALES FROM BUDDHA JATAKA













**NOW IN BOOK FORM**

**WORTH PRESERVING FOR ALL TIME**

Opens a new horizon in the world of literature for the young

Authored by Saraswati Samman and Sahitya Akademi Award winner

MANOJ DAS

***Jointly published by***

CHANDAMAMA  ***and***  Popular Prakashan

AWAIT DETAILS OF INTRODUCTORY OFFER TO SUBSCRIBERS OF CHANDAMAMA / JUNIOR CHANDAMAMA

**CHANDAMAMA** (Sanskrit) **MARCH 2005**
Regd No. TN/PMG(CCR)-589/03-05
**Regd. with Registrar of Newspaper for India No. 42664/85**
**Licensed to post without prepayment No. 371/03-05 Foreign - WPP. No. 372/03-05**



# अमूल्या सम्पत्तिः जलम्



वीणायाः पितुः सुहृत् सञ्जीवः कस्याञ्चित् स्वायत्त-संस्थायां विज्ञानी । जलसंरक्षणविषये प्रवर्तमाने सम्मेलने भागवहनाय सः नगरं प्रति आगतः अस्ति । सः वीणाम् अवदत् - ''संयुक्तराष्ट्रसङ्घस्य सामान्य-सभायाः मार्गदर्शिसूत्राणाम् अनुगुणं मार्चमासस्य २२ तमः दिनाङ्कः विश्वजलदिनत्वेन आचर्यते । जल-संरक्षणविषये जनजागरणं कर्तुम् एतत् सम्मेलनम् आयोजितम् अस्ति । अस्माकं संस्था समूहमाध्यमानाम् उपयोगेन जनशिक्षणं कर्तुम् इच्छति'' इति ।

''जलरक्षणस्य का वा आवश्यकता ?''

''नैसर्गिकतया प्राप्यमाणम् अमूल्यं वस्तु अस्ति जलम् । प्रपञ्चस्य ७०% भूभागः जलमयः अस्ति । तस्य९९% भागः मानवोपयोग्यः नास्ति । यः मानवोपयोग्यः अस्ति तस्यापि भूयान् भागः उपयोगाय प्राप्यमाणः नास्ति । उपयोगयोग्यस्य जलस्य परिमाणं निरन्तरं क्षीयमाणम् अस्ति'' इति विवृतवान् सञ्जीवः ।

''हा हन्त ! घोरा स्थितिः एषा । एतत्सर्वं मया नैव ज्ञातम् आसीत् । जलसंरक्षणाय अस्माभिः किं वा कर्तुं शक्येत ?'' - वीणा अपृच्छत् ।

''बहु कर्तुं शक्यम् । जलस्य व्यर्थता आदौ निवारणीया । सस्यसेचनसमये नलिकोपयोगं स्थगयित्वा द्रोण्याः उपयोगः कृतः चेत् जलसञ्चयः भवितुम् अर्हति । कार्यानस्य क्षालनावसरे अपि एतत् एव तन्त्रं लाभकरम् । नलिकायाः स्थगनस्य अनन्तरं बिन्दुरूपेण यत् जलं पतति तस्मात् महती एव व्यर्थता भवति । अतः नलिकातः जलस्य स्रावः यथा न भवेत् तथा जागरूकता बोढव्या ।''

''अद्य आरभ्य एव अहं बिन्दुशः जलसञ्चयं चिन्तयिष्यामि'' इति प्रतिज्ञातवती वीणा ।